# पूर्णकुम्भः

(ललितनिबन्ध-संग्रहः)

रचयिता

पं० विष्णुकान्त शुक्लः

रु० २०-००

१९८२






देववाणी-परिषद्, दिल्ली

६, वाणी-विहारः, नयी दिल्ली-११००५९ (भारतम्)

# पूर्णकुम्भः

## (ललितनिबन्ध-संग्रहः)


लेखकः

पण्डितविष्णुकान्त शुक्लः

एम० ए० (हिन्दी-संस्कृतयोः) साहित्याचार्यः, साहित्यरत्नम्

हिन्दी-विभागाध्यक्षः

जे० वी० जैन (पोस्टग्रेजुएट) कालेजः

सहारनपुरम् (उ० प्र०)



१९८२






प्रकाशिका

**देववाणी-परिषद्, दिल्ली**

६, वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

पूर्णकुम्भः (संस्कृत-ललितनिबन्धसङ्ग्रहः)

लेखकः : पण्डित विष्णुकान्त शुक्लः

प्रकाशिका : देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नयी दिल्ली-११००५९

मुद्रकः : देववाणी प्रिंटर्स
उत्तम नगर, नयी दिल्ली-११००५९

संस्करणम् : प्रथमम्, १९८२

मूल्यम् : विंशति रूप्यकाणि रु० २०.००






PŪRṆAKUMBHAḤ (Sanskrit Prose)

Author : Shukla, Pt. Vishnu Kant

Publisher : Devavani Parishad, Delhi
6, Vani Vihar, New Delhi-110059

Printer : Dev Vani Printers
Uttam Nagar, New Delhi-110059

Edition : First, 1982

Price : Rs. Twenty only. Rs. 20.00

# प्रास्ताविकम्

'देववाणी परिषद्, दिल्ली'-संस्थायाः सद्ग्रन्थप्रकाशनरूपमप्येकमुद्देश्यमस्ति। तदनुसारमद्यावधि परिषदा इमे संस्कृतभाषानिबद्धा ग्रन्थाः प्रकाशिताः- (१) **सुगमरामायणम्** (आचार्यश्रीरमेशचन्द्रशुक्लप्रणीतं महाकाव्यम्) (२) **श्रीकृष्णचरितम्** (आचार्यश्रीरमेशचन्द्रशुक्लप्रणीतं महाकाव्यम्) (३) **कर्णभूषणम्** (डा० सी० आर० स्वामिनाथ-कृतं नाटकशोकगीतिप्रबन्धात्मकं रचनात्रयम्) (४-६) **अर्वाचीनसंस्कृतमहाकाव्यविमर्शः** (डा० रमाकान्तशुक्लसम्पादितः खण्डत्रयात्मकः समीक्षाग्रन्थः) (७) **हरविजयस्य साहित्यिकमध्ययनम्** (डा० कृष्णकान्तशुक्ललिखितम्) (८) **श्रीमदप्पयदीक्षितचरितम्** (डा० हरिनारायणदीक्षितरचितं गद्यकाव्यम्) (९) **भाति मे भारतम्** (डा० रमाकान्त शुक्लप्रणीतं काव्यम्) (१०) **भारतस्वातन्त्र्यसङ्ग्रामेतिहासः** (डा० रमेशचन्द्रशुक्लकृतः) (११) **सदाशयसमुच्चयः** (श्री टी० वी० परमेश्वरअय्यरप्रणीतः) (१२) **आभाणकमञ्जरी** (श्री टी० वी० परमेश्वरअय्यरप्रणीता) (१३) **देववाणीदर्शनम्** (डा० रमेशचन्द्रशुक्लादिसम्पादितम्) (१४) **जय भारतभूमे !** (डा० रमाकान्तशुक्लप्रणीतं काव्यम्) (१५) **राधाकृष्णरसायनम्** (श्री ओट्टूर-उण्णिनम्बूदिरीपादरचितं भक्तिकाव्यम्)(१६)**अभिनवहनुमन्नाटकम्** (आचार्यरमेशचन्द्रशुक्लप्रणीतं संस्कृतनाटकम्) (१७) **अर्वाचीनसंस्कृतसाहित्यपरिचयः (प्रथम खण्डः)** (डा० रमाकान्तशुक्लसम्पादितः) च। परिषदा हिन्द्यां रचिताः संस्कृतसाहित्यपरका इमे ग्रन्था अपि प्रकाशिताः :—(१८-२१) **'मेघदूत : एक विश्लेषण', 'रघुवंश : एक विश्लेषण', 'अभिज्ञानशाकुन्तल : एक विश्लेषण', 'कालिदास की कला और संस्कृति (भाग-२)'** (ले० डा० देवीदत्त शर्मा) तथा (२२) **'साधारणीकरण और समानान्तर चिन्तन की पूर्वपीठिका'** (ले० डा० सुलेखचन्द्र शर्मा), (२३) **भट्टनायक और अभिनवगुप्त की साधारणीकरणविषयक अवधारणा** (डा० सुलेखचन्द्र शर्मा)।

इदानीञ्च परिषदियं साहित्याचार्य-साहित्यरत्न-एम० ए० (हिन्दी-संस्कृत) प्रभृत्युपादिभूषितेन सहारनपुरस्थ जे० वी० जैन (स्नातकोत्तर) कालेजे हिन्दी-विभागाध्यक्षेण किञ्च देववाणी-परिषदः प्रतिष्ठितसदस्येन पण्डितविष्णुकान्तशुक्लेन विरचितं ललितनिबन्धसङ्ग्रहं **'पूर्णकुम्भं'** नाम प्रकाशयन्ती हर्षमनुभवति।

पण्डितविष्णुकान्तशुक्लः स्वर्गीयाचार्यश्रीब्रह्मानन्दशुक्लात् श्रीमत्यां प्रियम्वदादेव्यां १९-१०-४२ तारिकायां उत्तरप्रदेशस्य 'बुलन्दशहर' जनपदान्तर्गते 'खुर्जा' नाम्नि नगरे समुत्पन्नः। आबाल्यादेव हिन्दी-संस्कृत-काव्यानां पठने,

कण्ठीकरणे निर्माणे चास्य महानुभावस्य रुचिर्ददृशे। शालप्रांशुर्महाभुजोऽयम् **'अक्षरश्लोक'** कर्मणि सिद्धः। आबाल्यादेवायं महानुभावः वेदमन्त्रान्त्याक्षरी श्लोकान्त्याक्षरी - संस्कृतनाटकाभिनय - वादविवादप्रतियोगितादि - कार्यक्रमेषु सोल्लासं भागं जग्राह। **'साप्ताहिक हिन्दुस्तान'-'कादम्बिनी'-'मनोरमा'**-प्रभृतिहिन्दी-सावधिकपत्रेषु प्रकाशिताः शुक्लमहाभागस्य हास्य-व्यङ्ग्यपूर्णा-लेखाः यथा पाठकैश्लाघ्यन्त तथैव **'स्वरमङ्गला'-'संविद्'-'विश्वसंस्कृतम्' 'अर्वाचीनसंस्कृतम्'**-इत्येवमादिषु संस्कृतपत्रेषु प्रकाशिता लेखा अपि पाठकैः सहर्षं सानन्दं च पठिताः। १९८१ तमे वर्षे प्रकाशिता **'स्फाटिकीमाला'** इत्येतन्नाम्नी मुक्तककाव्यरचना अस्य विशिष्टा कृतिः यद्विषये मया **'अर्वाचीनसंस्कृत'स्य** (त्रैमासिकपत्रस्य) चतुर्थवर्षीये द्वितीयेऽङ्के संक्षिप्ता समीक्षा कृतासीत्। इयं रचना **उत्तरप्रदेशसंस्कृताकादम्या** पुरस्कृताप्यजायत।

**'पूर्णकुम्भः'** श्रीशुक्लस्य दशललितनिबन्धानां संग्रहः। **'ललितनिबन्ध'**-नाम्नी विधा हिन्द्यां पर्याप्तं प्रसिद्धा। अस्मिन् निबन्धसङ्ग्रहे लेखकेन स्व-लोकावेक्षणजन्यव्युत्पत्त्याः प्रकाशनं कृतम्। **यात्रावृत्तान्त-रिपोर्ताज-व्यङ्ग्यलेख-प्रत्यक्षवर्णन-दैनन्दिनी**-प्रभृतिगद्यविधानामत्र दर्शनं कर्तुं शक्यते। संस्कृत-साहित्ये इमा विधाः नवीना एव सन्ति।

एषु लेखेषु श्रीशुक्लस्य निर्भीका शैली अवलोकनीया। नाशित-स्वास्थ्यान्, शीलरहितान्, कृत्रिमजीवनान् स्वदेशयूनो यथायं धर्षयति न तथा प्राय आधुनिका लेखका कर्तुमुत्सहन्ते। क्वचिदभिधयैव सर्वमपि वक्तुकामोऽयं लक्ष्यते। आधुनिकविषयपरिग्रहणेन साकं पूर्वप्रतिष्ठापितामलङ्कृतां गद्य-शैलीमप्ययं सादरमुद्वहति। उत्कलिकाप्रायस्य, चूर्णिकात्मकस्य वृत्तगन्धिनश्च गद्यस्य यथावसरमनेन प्रयोगो विहितः। **'विवेकानन्दशिला'** शीर्षके निबन्धे (पृ० ४१-४२) **"गतायांनिशायां चलन्ति"** आदि भुजङ्गप्रयातवृत्तगन्धिगद्यं नूनं पारम्परिकीं प्रौढिं समभिव्यनक्ति पण्डितविष्णुकान्तशुक्लस्य। प्रकृति-नगर-मन्दिर-पर्वत-आपण-मेलापक-वरयात्रा प्रभृतीनां वर्णनेषु रचनाकारस्य सूक्ष्मे-क्षिका, लोकानुभवः नव्यभव्यशैलीकर्तृत्वं च समीक्षकैः साक्षात्कर्तुं शक्यन्ते। पूर्णकुम्भस्य रसास्वादनार्थं सहृदयाः सादरमामन्त्र्यन्ते।

पण्डितविष्णुकान्तशुक्लः **'पूर्णकुम्भ'**-रचनार्थं परिषत्पक्षतः सादरं सस्नेहं च समभिनन्द्यते। पाठकाः क्वचित्सञ्जाताः मुद्रणत्रुटीः संशोधयितुं सादरं प्रार्थ्यन्ते।


विदुषां वशंवदः

रमाकान्तशुक्लः

महासचिवः

देववाणी-परिषद्, दिल्ली

२९-१०-१९८२

आर ६ वाणी-विहारः, नयी दिल्ली-११००५९

अथ

पण्डितविष्णुकान्तशुक्लविरचितः

# 'पूर्णकुम्भः'

## (ललितनिबन्धसङ्ग्रहः)

## अनुक्रमः

# द्वित्राः शब्दाः

अयि देववाणी-समाराधकाः सहृदयाः विद्वांसश्च,

**'पूर्णकुम्भ'**-नामायं लेखसङ्ग्रहस्तत्रभवतां करकमलेषु सादरमुपह्रियते। अत्र १६६७ तः १६८१ यावल्लिखितः केचन ललितनिबन्धाः संगृहीताः सन्ति। एतेषु केचन **'विश्वसंस्कृतम्'**-**'स्वरमङ्गला'**-**'संवित्'**-प्रभृतिपत्रिकासु प्रकाशितपूर्वा अपि सन्ति। सहारनपुरस्य घण्टागृह (घण्टाघर)-क्षेत्रमद्यत्वे किञ्चित्परिवर्तितमिव सञ्जातम्। मया १६६७ तमेशवीयेऽब्दे तस्य वर्णनं कृतमासीत्। यैर्दृष्टं तथाभूतं घण्टागृहक्षेत्रम् तेऽवश्यमेव तदत्र पुस्तके प्रत्यक्षीकरिष्यन्तीति आशासे। एतेषु निबन्धेषु यदपि निबद्धं तत्सर्वं मया साक्षादनुभूतम्। इदानीं तत्सर्वं सहृदयानां सेवायां सादरं निवेद्यते। ये के चात्र दोषाः स्युस्तैरहमवश्यमेव परिचितः कार्यः सहृदयैर्विपश्चिद्भिर्दोषज्ञैः। **देववाणी-परिषद्, दिल्ली'** **पूर्णकुम्भ**-प्रकाशनार्थं धन्यवादार्हा।

—विदुषां विधेयः

विष्णुकान्त शुक्लः

**'विभावना'**

प्रद्युम्ननगरम्

शिवारण्यपुरम् (सहारनपुरम्), (उ० प्र०)

पण्डितविष्णुकान्तशुक्लविरचितः

# पूर्णकुम्भः

## (ललितनिबन्ध-संग्रहः)

### (१) सहारनपुरस्य घण्टागृहश्रृङ्गाटकम्

सहारनपुर लौह-पथ-गामिनी-विश्रामस्थलान्नातिदूरं घण्टागृहमायाति। घटिकागृहमितिवक्तव्ये जनाः परम्परयादो घण्टागृहमिति कथयन्ति। ये च त्रिलोचना इव त्रि-घटिका-लोचन-धराः, पञ्चमुखा इव पञ्चमुखमार्गाः, जनार्दना इव सलक्ष्मीकाः, शोभन्ते घण्टागृहाः। प्रातरेवोभयतो मार्गं मिष्टान्नकाराणां पाषाणेङ्गालाङ्गारिकाः धूममुद्वमन्त्यः शुक्लानपि कृष्णान् कुर्वत्यः नित्यकर्मविरहितानपि सवेगद्विचक्र-यानमधिरोहतो निरुद्धनिःश्वासान् प्राणायामपरायणानिव प्रकुर्वन्त्यः, सात्त्विकाङ्गरागानपि रजोयुक्तान् कलयन्त्यः, स्वकीयकार्ष्ण्यं प्रकटयन्त्यो वातपीडिताः घनाकाराः प्रज्वलन्ति। अध्ययनाध्यापनोत्सुकान्वहन्तो "विरम-विरम" "सर्प-सर्प" "दृष्ट्वा न चलसि" "किमद्यैव वाहनमानीतवानसि" "एकतः एकतः" "तिष्ठ-तिष्ठ" "पुत्र-प्रियापेही"ति ब्रुवाणा द्रव्यापहारका इव जनापहारका अरक्षिता इव रक्षावाहका असन्तुष्टा इव धावन्ति।

प्रायशो नाववादनकालतो घण्टागृहमार्गोऽतितमाञ्चलो भवति। मध्येश्रृङ्गाटकं वर्तुलचक्र-स्थितो राजपुरुषो योगीव पञ्च-प्राणमार्गनियन्ता, हिंसक इव दत्तभयहस्तः, प्रवृद्धवायुरिव प्रकम्पितः, नीरोग इव वशेन्द्रियमार्गग्रामः, बद्धोष्णीषस्तरलितचक्षुस्सोपानत्को

भूस्थोऽपि स्वस्थो विराजते। अयञ्च मार्गः—उद्यानमिव सफलो विलासीव सुगन्धाङ्गरागधरः क्रोधीव रागी, सुरचाप इव विविधवर्णः साहित्यिक इव छन्दःप्रियः, वसन्त इव समदनः, गंगाधर इव सचन्द्रः, वैयाकरण इव लोपागमवर्णविकारबहुलः, हनूमानिव रामानुरागी, कुशिष्य इवागुरुसेवकः, चन्द्र इव वारुणीप्रियः, बाण इव पाञ्चाली-प्रियः, गोकुलमिव श्रीकृष्णाधिष्ठितः, अर्जुन इव सकृष्णः, कुमार इव सकुमारः, नकुल इव सहदेवयुतः, विद्यालय इव विद्यार्थिना सम्मानितः, रविरिव सप्रकाशः, निष्कुट इव साशोकः, हिमालय इव समानसरोवरः, मानसरोवर इव सराजहंसः, विधिरिव सहंसः, सिन्धुरिवामृताधिष्ठितः, सवैद्यनाथः, सरजकः नीरजोऽपि रजोवान् कमलविकास इव सप्रभातो भाति।

प्रायः सन्ध्याकाले लक्ष्मण इव सुमित्रानन्दवर्धनः, नारायण इव वैजयन्तीप्रियः, चक्षुःश्रवा इव गतश्रुतः, शेष इवासंख्यवाक् जनसम्मर्दो मन्ये, भगवतो विधातुर्नामरूपात्मकोभयरूपं जगद्दिदृक्षुश्चित्रमत्व-रितगतिर्निर्मलवासाः ताम्बूलपूरिताननः, धूम्रवर्तिका-धूमोद्वमन-स्वान्तःकालिमानं प्रकटयन्निव चित्रगृहं याति। परस्पर-गृहीत-करतलानां बद्धवृद्धकूर्चानां, श्याम-नील रक्तोष्णीषाणां, तर्जितश्मश्रूणां, गौरवर्णानां, गतक्लमानाम्पञ्चाम्बुदेशीयानामालोकः क्वचिद्धम्मिल्ल-वतीनां युवतीनां बिम्बाधरोष्ठीनां कज्जलकलितापाङ्गानामङ्गनानां, कविकाकर्षणरुद्धोत्थितानामश्वानामिवोत्तुङ्गपयोधराणां, वक्षः-स्थापितकृत्रिमहारमणीनां रमणीनां विविधप्रसाधनोपयुक्ताङ्गराग—हैयङ्गवीनास्वाभाविककेशजालवतीनामवतारः, क्वचिदतिरागयुक्ता-धराः मुक्तकेशकलापाः करधृतस्वल्पद्रव्यप्रसेवकाः रक्तपिपासवः कपालधारिण्यो निशाचर्य इव दरीदृश्यन्ते। प्रकाशान्तिकं प्रवाहित-कुल्या सेतु-निषण्ण-चर्मकार-पुरःस्थापितपादत्राणपंक्तिः काकपंक्ति-रिव श्यामा विद्युत्प्रकाशयुता चाकचिक्यमुत्पादयति। तत्रैव क्वचित् पञ्चशताङ्कधरदैहिकबलपरीक्षकाणि यन्त्राणि दर्पावलेपवर्द्धित-

स्ततो दृष्टिपातं कुर्वद्भिः पीतवर्णैः शुष्ककलवेरैर्निपीतधूम्रवर्तिकैश्चलन्नितम्बैः प्रकटिवक्षोभिरुन्नतकपोलान्तरदशनैराकृष्यमाणानि 'पीं-पीं'-इत्युपहासध्वनिकाराणि कमपि गजमिव गभीरं, सिंहमिव श्मश्रुलं, वृषभमिव बलिष्ठं, अनुमानमिव सत्पक्षं, मधुराकृतिं बलादाकर्षयन्ति। क्वचिज्जानुनिहितकराग्राः न्युब्जीकृतकलेवराः, तरलितकूर्चाः, दन्तधावन-पुञ्जादेकैकं पर्यालोचयन्तः पञ्च द्वितयम् एकमेव देहीति ब्रुवाणाः शुभ्रदशना जना दर्शनपथमायान्ति। सन्निहिततीक्ष्ण-प्रकाशदीपका विविधवस्त्राभिलाषविवर्द्धका एकेनैव मूल्येन विक्रयं कुर्वन्तो धैर्य-धौरेया रात्रिप्रिया वस्त्रविक्रेतारो मेदिनीगता गृहीत-प्रोञ्छनपटाः कस्मै न नयनानन्दं ददति। ताम्बूलविपणिकासु ध्वन्यमानविविधगीतवादित्ररूपककाव्यहास्यादिकं वितरदमन्दानन्द-मनुभावयदाकाशवाणीयन्त्रं पान्थश्रुतिविवरं विदीर्णयदात्मानमेव निःसारं करोति।

सर्वमुपलभ्यते घण्टागृहमार्गे। एकत आलुकनिर्मितानि त्रिकोणादीनि मरीचिमयानि खाद्यानि, क्वचिद्दुग्धमयाः पदार्थाः, क्वचित्फलानि, क्वचिदिक्षुदण्डरसः, क्वचिच्चायं, क्वचित्पानकं, पुस्तकालयः, द्रव्यालयः, औषधालयः, केशकर्तनालयः, भोजनालयः—इति सर्वमेवात्र। अयमेव मार्गः प्रणवश्छन्दसामिव नगरमुख्यः इममेवाधिकृत्य स्थिता आवश्यकवस्तुव्यापारिणोऽनेनैव पथा गच्छन्ति सर्वत्र जनाः, अस्मै दत्तलोचनाः सर्वे अस्मादेव भ्रमणतुष्टिः अस्यैव महिमानं गायन्ति नागरिकाः, अस्मिन् अवश्यमेव रतिं कुरुत अयि सहृदयपाठकाः।

# (२) एकं वरयात्रा-दर्शनम्

अस्म्यहं स्वनगरघण्टागृहशिखरे। इयमस्ति एका वरयात्रा। मदाननसम्मुखीयं 'सोफ़ियास्कूल' तः समायाति। पूर्वमेते विविधवाद्यवृन्दोपेताः सुरक्तवर्णवस्त्रधारका रजोगुणयुक्ता अपि मन्ये र.गं दूषयन्तः कर्णकटुध्वनिना नूनं सारस्वतवैभवं भीषणं कुर्वन्तः पुरस्तादायान्ति। एतेष्वप्यन्यतमो लम्बमानो जरठो लम्बकाष्ठदण्डं रजतपत्रोपेतं गदाकारं करे कृत्वेतस्ततो दर्शकान् हास्योन्मुखान् कुर्वाणः स्वयञ्च कृत्रिम गाम्भीर्यमाकलय्य मध्यलोपयुतं श्वेतश्मश्रुजालं चालयन् नर्तकायते। अहह! दुरन्तपूर! उदर! त्वत्कृते किं किन्न क्रियते नटवन्मनुष्येण!

तदनु केचन मञ्जीराणां रणितेन, दुन्दुभीनां घोषेण, वंशीनां निनादेन, गोमुखानां प्रतिध्वानेन, कर्णकुहरं स्फोटयन्तश्शनैश्शनैरग्रे यान्ति। तेषामयं नायकः आंग्लवेषेण मन्ये स्वात्मानमपि परतन्त्रताकञ्चुकेनाच्छाद्यासुरीवृत्त्या दर्शितक्रूररक्तनेत्रः, सुरासम्पर्कसमुत्थसद्यःस्फीततीव्रोत्कटगन्धेन सन्निकटजनानामुपरि स्वचरित्रचाञ्चल्यं सुरापित्वं, स्वच्छन्दाचरणञ्च प्रकटयन्, कदाचिच्छिरस्त्राणमधः कृत्वा, शिरसि वाद्यं निधायासभ्यरूपेणाकुञ्च्य शरीरं, यस्य कस्यापि कोमलकपोलपृथुकस्य कपोलं करेण स्पृष्ट्वा, कदाचिच्च केनापि ग्राम्यनायकेन करधृतरूप्यकं विहस्य भ्रूभङ्गेण सलीलं गृहीत्वा, कदाचिच्च मुमूर्षुरिव मुखादस्पष्टतीव्रध्वनिं कृत्वा, भूमौ निपत्य सहसैवोत्प्लुत्य क्वचित्तीव्रं क्वचिच्छनैर्याति।

वाद्यानन्तरमेव किशोरद्वयं स्वीकृतनर्तकरूपमायाति। अस्मिन् नर्तकद्वये एको नर्तकीरूपमङ्गीकृत्य नृत्यन्नायाति। अस्य नेत्रचाकचिक्यकारिणी पोतवेशभूषा, वक्षसि कन्दुकद्वयसहितकूर्पासकम्, चक्षुषोः कज्जलम्, शिरसि कृत्रिमा वेणी, अधोभागे चण्डातकम्, पादयोः

पादपालिके, कपोलयोः पाटलद्रव्यम्, अधरयोः रागः मणिबन्धयोः काच-लौह-कङ्कणानि, कण्ठे लघ्वी मालिका, चेतसि पुरस्कारप्राप्ति-चिन्ता, तनौ चाञ्चल्यं, नयनयोः कामविकारः—इति सर्वं विलोक्यते प्रबुद्ध-प्रबुद्ध नागरिकैः। केचन अमुमेव चित्रतुरगन्यायेन मन्ये षोडशीं मन्यमानाः मुहर्मुहुः कामाभिभूता इवावलोकयन्ति कृतमनःसङ्कल्पाः। अस्य च द्वितीयः सखा नर्तकवेशेण मनो हरति दर्शकानाम्। अस्य शिरसि कृत्रिमसुवर्णतारखचितं जटितमिव शिरस्त्राणं, पादयोः सुवर्णवर्णमुपानद्युगलं, तादृशी एव भूषा। नर्तकद्वयमिदं कदाचित् गीतानुरूपं, कदाचित् कांस्यपात्राणि गृहीत्वा, कदाचिद् दीपद्वयं गृहीत्वा कदाचिदुत्तरीयमुद्धूय नृत्यति। अस्य अङ्गसञ्चालनं, तत्रापि नितम्ब-कटि-वक्षसां विशेषचालनं कम्पनञ्च नितरां ग्राम्यमपि कलापूर्णं, अभ्याससाध्यं श्रमसाध्यञ्चास्ति। अस्य युगलस्य मुखवाद्य-मपि पूर्वोक्तेन वाद्येन पृथगस्ति। तत्सङ्केतेनैवास्य कार्यक्रमः चलति।

एते चान्यायोपार्जितवित्तास्ताम्बूलपूरितदुर्मुखाश्चौरा इव चकिताः कञ्चुककोषान्निष्कास्य नवीनं पत्रमयं रूप्यकं तर्जनीमध्य-माभ्यामेव धृत्वा, वरगण्डान्तिकं कृत्वा, तमेव पूर्वोक्तं वाद्यवृन्दनायक-माकारयन्तीङ्गितेन वरयात्रिणः। अयं वरस्य जनकः पुत्रविवाह-जनितानन्दं लब्धव्ययधनराशिविचारेण गौणत्वमापादयन्, लम्बोदर-लम्बितकञ्चुकं चालयन्, दुर्विनीतवेशः, कदाचिद् वाद्यं, कदाचिन्मित्रमण्डलं, कदाचिदात्मजं विलोक्य, कदाचिच्चेतस्ततो दृष्टिं पातयन्नायाति। सन्त्येते वरयात्रिणो मन्ये भूतभावनविवाहयात्रिणः। अत्रापि कश्चन द्विजिह्वो द्विजिह्वप्रियः, कश्चन विभूतिप्रियो वृद्धग्रीव इतरो बृद्धकीटोदरः, परो गोमुखोऽपरः प्रवृद्धकूर्चोऽन्यः खञ्जः खल्वाटो विषमनेत्रो दीर्घदशनोऽदन्तः। कश्चिद् वृकोदर इव वृकोदरो, नकुल इवाकुलीनो, गज इव लम्बनासिकः, खर इव दीर्घकरः, प्रातिपदिक-मिवाप्रत्ययः, चित्रमिव विविधवर्णः, सुरधनुरिवं सङ्कटवारिदसूचको, निशाकाल इवामित्रोऽग्निरिव करालकरश्शशीव कलङ्कधरश्शनैश्चर

इव शनैश्चरः, पाण्डुरिव पाण्डुर्दुर्योधन इव दुर्योधनो भीम इव भीमो दुःशासन इव दुःशासनो, मङ्गल इव कुपुत्रः, समुद्र इवाज्ञानभेदः, काक इव बलिप्रियः, पिशिताशन इव पिशिताशनस्ताम्रचूड इव ताम्रचूडः, पुराणमार्ग इव साधारणजनपादप्रहारताडितो, मृत्युरिव सन्निपातप्रियः, रस इव सव्यभिचारी, वैयाकरण इव सन्धिविच्छेदप्रियः कस्य न चेतश्चमत्कृतिमुत्पादयति ?

इदञ्च वराश्वस्याग्रे यौवतमेकं चलति। अस्मिन् वह्व्यो युवत्यो विविधवेषसज्जासुसज्जिताः जिततरुणहृदयदुर्गाः गात्रसञ्चालनक्रियानिष्णातास्ताम्बूलकृत्रिमरागादिभिर्मदनवर्द्धकै रञ्जिताधरोष्ठ्यः, कज्जलकलितापाङ्गाः, अर्द्धदर्शितपयोधरभागाः, काश्चन बहुमूल्यकञ्चुकीभिरेव स्तनोत्तुङ्गत्वं प्रकटयन्त्यः शुष्कस्तन्यो, दर्शितनाभिमण्डलपरिधानाः, कङ्कणकलितेषु करकमलेषु अर्द्धपीतानि प्रपानक-पेय-कोकाकोला-फैण्टा-लिम्का-मैरेय-कांचपात्राणि गृहीत्वा पौनःपुन्येन पिबन्त्यः, काश्चन बाहुमूलानि किञ्च तत्रत्यानि वृद्धलोमान्यपि उद्घाट्य प्रदर्श्य च, कदाचित् करताडनपुरस्सरं वीभत्सं हसन्त्यो नृत्यन्ति। कदाचित् उत्प्लुत्य कदाचिन्नितम्बवक्षोजौ प्रकम्पयन्त्यः, कामोपभोगसुलभान् यूनो मदविकृतेन नयनेनैव व्यथितान् विधाय, धृतप्रसेवकाः, काश्चन स्थूलकृत्रिममुक्ताहारयुक्ताभ्यां पयोधराभ्यां किञ्चिन्नम्रभावाः, काश्चन मुक्तदीर्घकेश्यः, काश्चन धम्मिल्लशोभिता नितम्बिन्यः, काञ्चोदामदमितजघनाः, स्वैरं गच्छन्ति। अत्रैव काचिन्नभोमण्डलं त्यक्त्वा समायातेव शशिकला नयनहरी निशिसुखदा, काचिन्मत्तसङ्कर्षणसीराकर्षणभयतरङ्गितेव यमुना, काचिन्नयनाभ्यां मीनवती गम्भीरावर्तनाभिः गङ्गेव, काचिन्मदविवशरागानना रक्तपरिधानेव सरस्वती, काचित्सौन्दर्यसारा बहुभिर्निरीक्ष्यमाणा रतिरिव, काचिन्मदविह्वलाक्षैर्निपीयमाना सुरासुन्दरी, काचिद्गानस्तब्ध-

कर्णेव मृगो, काचित्स्थूलजघना मन्दं मन्दं चलन्ती विवशेवावशा, काचित्सुगन्धद्रव्यविलेपनात् समन्तात् स्थितान् भ्रमरभुजङ्गान् आकर्षन्तीव पद्मिनी, काचिद् गौरिव सरला, कापि भुजगीव कुटिला, कापि यक्षलक्ष्मीरिव सखी-परिचारिकाभिरुपशोभिता, कापि मन्दस्मितेन हरन्ती हृदयानि, कापि विक्षिप्तेवेतस्ततो नगरशोभानिरीक्षणव्यस्ता काचिद् वृथापरिश्रमश्रान्तकलेवरेव स्खलन्ती, कापि क्षुत्क्षामा।

अस्तीह नर्तकसमूहः, यश्च मन्ये नूतनो वृहन्नलावतार एव भुवमध्यास्ते। अत्र हि केचनातिसङ्कुचितवासोभिः परिरुद्धाः, केचन चण्डातकानुकारिभिः पैण्टाख्यैः अधोवस्त्रैः आच्छन्नाधःकायाः, विषमशरताडिता इव, निर्भिन्नहृदया इव, मूका इव, बधिरा इव, स्वयमेव परितो दृष्टिपातं कुर्वन्तो नृत्यन्ति नितम्बसञ्चालन पराः 'ट्विस्ट' प्रिया नवशिखण्डिनः। किञ्चैते मण्डलभ्रमणका अल्प-प्राणा इवाल्पप्राणाः खरा इव प्रखरा बद्धग्रीवाः इव बद्धग्रीवाः, क्रमेलका इव लम्बग्रीवाः कण्टकप्रियाश्च पुच्छविषाणहीना दर्शं दर्शं जनसमूहं नृत्यं विडम्बयन्ति। एतेषां केषाञ्चिच्चलन्नितम्बानां रीतिरनुचितनृत्यमुद्रानिन्दिता दृष्टिः पैशुन्यं मानसस्य, दैन्य-माननस्य, मालिन्यं क्लैव्यञ्च स्वभावस्य चाञ्चल्यं वक्रगतिश्च-पादयोः—एतत् सर्वं कं सहृदयं नोत्तेजयति ?

एषु नर्तकेषु केचन क्षीणकायाः कङ्कालाकृतयः सम्भोगं, आलिङ्गनं, नखक्षतं, स्तनमर्दनं, बलात्कारं, सुरापानं, अवगुण्ठनं, लज्जां निर्लज्जाः प्रस्तुवन्ति मुद्राभिः। रामाराधितहृदया नैते लक्ष्मणाः, मधुप्रिया अपि न कामाः, कुमारा अपि मारवेगविक्षिप्ताः, लब्धसुरानन्दा अपि असुरानुगुणाः, लघुविग्रहा अपि वृद्धविग्रहाः हन्त ! चाकचिक्ययुतैरवलोक्यन्ते भुजङ्गा अपि मणिगुणहीनाः।

न जाने कस्य किल्विषस्य परिणामो यदेतेषु कुलकलङ्केषु

कुलाङ्गारेष्वनधीतशास्त्रेषु निन्दितगुरुजनेषु सञ्चितदुराचारेषु कृतमधुपानेषु भुजङ्गेष्विव विषमयकलेवरेषु कुटिलाकारस्वभावेषु श्रुतिहीनेषु, निशाचरेष्विव निशाचरेषु, खण्डितयौवनेषु, भग्नदन्तेषु, गतसंस्कारेषु, निन्दितचरित्रेषु मृतप्रायेष्विवाभारतीयेषु, क्लैब्यमेतदायातम्? नैते लज्जामनुभवन्ति कृत्वापि दुर्जनचरितम्। न कदाचिदपि भवति एतेषु स्वाभिमानलवलेशो, न च भारतीयता, नैव पुरुषत्वं न च सहृदयत्वम्।

नर्तकमण्डलेन साकं चलति एष गायकः। अयमपि तारतरस्वरेण चलच्चित्रगीतानि गायति। अस्य दक्षिणकराग्रे ध्वनिविस्तारमुखयन्त्रं माइक्रोफोनाभिधमस्ति। चक्रचतुष्टयविराजिते उद्घोषकसज्जिते, विद्युद्दीपदीपिते, धूम्रपानधूमधूपिते शकटे अयं वराक उदरंभरिर्गायकाधमः स्थितः। निरन्तरगानपरः कदाचिदयं वरयात्राकालप्रतिकूलान्यपि वैराग्यकारुण्योत्पादकानि गीतानि गायति। अस्य गन्धर्वत्वं कर्णावेव पीडयति न तु प्रीणाति हृदयम्।

पञ्चसु 'कार'यानेषु काश्चन दुर्बलाः, शिशुसमेताः मातरः स्थिताः। केचन अबोधमुग्धाः दुग्धमुखाः अङ्गुष्ठमुद्रितमुखा बालका अपि एतेषु स्थिताः। एते मार्गभ्रष्टा मा भवेयुरिति कृत्वा मन्ये स्थापिताः बालाः यानेषु।

तदनु एते वराका बालयवना न्युब्जीकृतकलेवरा वृद्धा इव नम्रकन्धरा देवतानां दीर्घचित्राणि स्कन्धेषु निधाय, तद्विनाशभयभीता, मनसि द्रव्यचिन्ताचिन्तिता इव केनापि प्रेर्यमाणा दीना व्रजन्ति।

अनन्तरमेष वर आसन्नमृत्युरिवाचञ्चलः, कल्किरिव सघोटकः, सापराध इव मालाजालजटिलः, कुमार इव सुकुमारः, संग्रहालय इव वस्त्राणाम्, वध्यस्थलं जिगमिषुरिवामूल्योष्णीषशोभितोत्तमाङ्गः, युवावस्थादोषजनितदौर्बल्यमन्तर्मुखं निरन्तरदन्तचालनेन प्रकटयन्

अगूढजत्रुर्बद्धकण्टकौपीनो ग्रीष्मकालेऽपि दीर्घाङ्गरक्षकं कोटाख्यं धारयन् तस्यैव कोषे मुखप्रोञ्छनपटमर्द्धं निष्कास्य मणिबन्धधृत-विवाहकौतुकमपि स्वासामर्थ्येन पटपिहितं कृत्वा वृद्धमुखं बैलबाटम पतितलूनं (पतलूनं) परिधाय, बृहन्मुखमुपानद्युगलवेष्टितमिव पादयुगलं घोटकालम्बितलौहशृङ्खलाखण्डे कृत्वा, किञ्चिद्विहस्य, बद्ध इव, रुद्ध इव, यौवनसुखमकालकालकवलितं कृत्वा नम्रपृष्ठ-भागः, कराभ्यां कविकाकर्षणं कुर्वाणोऽट्टालिकोपरि प्रतिष्ठिताभिः प्रौढाभिरालोच्यमानो, जरठाभिः सस्पृहं सदयं सहासं सकम्पमभि-लक्षितः, उद्भिन्नयौवनाभिः नूनमधीतनायकगुणसमूहाभिर्युवतीभिः सस्पृहमीक्षितः, पूर्वं द्रागेव परिवर्तितमुखीभिश्शङ्के तिरस्कृत इव, कैश्चन स्वास्थ्यसंवर्द्धकैः सहासमवलोकितः कदाचिदूर्ध्वं दिदृक्षु-राकर्ण्य भुशुण्डीशब्दं भीतभीत इव भूयः सम्मुखमेवावलोकयति ।

सर्वान्ते चैते चलदीपाधारभूता इव, अविद्योपासका इव अन्धे तमसि मग्ना, अर्थाभावभूताः क्लिष्टाप्रसिद्धशब्दा इव, मलिनाम्बरा, मूर्तदैन्याः, कम्पग्रीवाः, सन्तोषधना, योगिन इव विजिताभिलाषा, भोगिन इव कृष्णवर्णाः, शिरःस्थितमणिदीपा, विहाय स्वकीयं गृहं, हित्वा परिवारं, त्यक्त्वा मोहराशिं संन्यासिन इव चलन्ति ।

गता चेयं वरयात्रा । अनुजानीहि भो घण्टागृह ! मां गमना-यावतरणाय च ।

●

## (३) काल-महिमा

अहह कराल काल ! तावकीनं कौटिल्यम्, तव कला कलाप-प्रभुत्वम्, तव परपीडनपाण्डित्यम् ! कोऽस्ति तव महिमानं समग्ररूपेण

ज्ञातुं गातुं वा शक्तः ? एतानि कानिचित् त्वदीयानि विचित्राणि चित्राणि यान्येव दर्शं दर्शं स्मारं स्मारं तव सामर्थ्यं जगत् चाकचिक्ययुतमिवात्मानं मन्यते ।

नवदम्पती ! विवाहानन्तरं वर्षत्रयं व्यतीतम् ! पुत्ररत्नाकरो दृष्टः । काकलीकलितं तदाननं पश्यन्ती तन्माता तस्य स्तनन्धयतां सफलीकरोति । सहसैव शिशुर्विरमते दुग्धपानात् । सत्यपि पयःस्रावे नायं पिबति । मन्दभागिनी वराकी किंकर्त्तव्यविमूढा चीत्कारं करोति । पयसा विषचरितमाचरितम् । पलमात्रे परिणतस्तस्याः संसारः । जीर्णारण्यमिव जीवनम्—इदं किं त्वदीयमेव नास्ति कौटिल्यम् ?

× × ×

नायिकया साकं जलकेलिमग्नो नायकः । महाबलीपुरस्य समुद्रतटी । क्षारजलोत्थिते फेनपटले नायकस्य शोभां युवतिः साभिप्रायं निरीक्षते । समुद्रलहरिकासु तयोः प्रेमप्रवाहो विस्तारमाप्नोति । सहसैव प्रबलतरङ्गाघातप्रतिघातविचलितो युवाऽपारसागरं गतः । लब्धज्ञानेव युवती स्फारितनयना शून्यं पश्यति—किमिदं तव चातुर्यं कृपणकाल !

× × ×

प्रेम्णः परिणतिः । न्यायालये विवाहः । हरिद्रयैव विना रागः । कन्याजनकः स्ववक्षसि वज्राघातं सहते । अनभीष्टमपि अवरमपि वरमेव मन्यते । किं कर्तुं शक्यते ? पञ्चषा दिवसा गताः । श्रूयते सा विषं भुक्त्वा पत्रमेकं विलिख्य, स्थापयित्वा च पञ्चत्वमुपागता । तद्भर्ता श्रृङ्खलाबद्धः कारागारं निषेवते । अयमपि काल ! तवैव महिमा ।

× × ×

गतिमत् धूम्रयानम् । प्रथमश्रेणीकक्षे आरक्षितो यात्रिकगणः । निशीथः । मध्य एव काचिन्नदी समापतति । तत्सेतुभङ्गः ।

धमद्धमद्ध्वनिना आयाति धूम्रयानम्। घोरघोषसमेता जलराशौ निमज्जन्ति एञ्जिनेन सहिताः कक्षाः। केवलमन्तिमौ द्वौ अवशिष्येते। तयोः सन्ति कर्मकराः सर्वथा सुरक्षिताः। यात्रापत्राणि तेषां स्वामिनैव साकं जलसमाधिं स्वीकुर्वन्ति। क्रूरग्रह! कथय न को दोषस्तेषां मृतकानामकालकालकपोलकवलानाम्?

× × ×

अयि कलहप्रिय! अकालकाल! महाभारते तवैव प्रभुत्वमवलोक्यते। भीष्मद्रोणकर्णप्रमुखाः प्रवीरा धार्तराष्ट्राश्च व्यापादितास्त्वयैव। दुर्योधनोरुभङ्गकारिन्! निर्दय! गोपीरक्षणतत्परोऽर्जुनो भिल्लैः सन्ताडितः। त्वमेव तत्र भिल्लोऽसि नान्यः कोऽपि। भारतनायकः कृष्णो व्याधेन बाणेन हतः। हिंसामूर्ते! ननु व्याधस्त्वमेव।

× × ×

कुटिल परीक्षक! निरक्षरानुच्चासनस्थान् करोषि? वसन्तसमयमिव पण्डितसमाजं अजातिं चिकीर्षसि। रजकास्त्वयैव भाग्यविधातारः क्रियन्ते। उपानत् त्वयैव शिरस्त्राणीक्रियते। भालतिलकं त्वमेव भूमौ निक्षिपसि। कुशासनं त्वत्कृपाकटाक्षेणैव भवति शवासनम्। सोरस्ताडं तवैव क्रौर्यस्वीकृतिः। अहह। अन्धतापसकालरूप! किं त्वमेव दशरथत्वेन नासि अवतीर्णः श्रवणान्तक! सीताविवासनपटुस्त्वमेव रामस्त्यजसि लक्ष्मणम्।

× × ×

कदाचिन्माययाश्लिष्टं भुवनं त्वत्कृपयैव शोभनं भवति। एषणासु पतितोऽपि पुमान् जीवति, मिथ्याश्वासनैः श्वसिति। मुग्धशिशव इव जनास्त्वामेव पितरं मन्यन्ते। प्रचण्डग्रीष्म! त्वत्प्रतापेनैव पयसि विषत्वमायाति। जघन्य। कालहतक! हतास्त्वया सरलाः, पालिता भुजङ्गाः। जनतापहारिन्! सञ्जयस्त्वद्रूप एव न किमु? निगडबन्धघोषणाभिस्त्वमेव किन्न पीडयितुमिच्छसीन्दिराम्? त्वत्प्रणोदिता एव नेतारः स्वच्छन्दाचरणलम्पटा गच्छन्ति कारा-

मन्दिरम् कृष्णसुदर्शन ! न जहासि कमपि अश्वत्थामानम् ?

महदाश्चर्यन्तु इदम्, कोऽपि तव नाम न गृह्णाति। निमित्तान्येव नयनपथमायान्ति, न त्वम्। प्रलयरूप ! कृतमान्ध्रेषु जलप्लावनं त्वयैव। इन्द्रप्रस्थोडीसाविहारबंगेसु त्वदीया विनाशलीला कथं वा विस्मर्यते ? नाशे त्वदीया वास्तविकी शक्तिः। पातयसि यानानि पर्वतगर्तेषु त्वमेव। त्वदतिरिक्तः कोऽस्ति वायुयान-विध्वंसकः ! आशापोतभङ्गपुरःसरं मज्जयसि जीवान् संसारार्णवे। त्वं कालः। त्वमेव कालमृत्युः। त्वमेवाकालमृत्युः।

× × ×

बन्धो ! काल ! महाकाल ! विकराल ! त्वमेव हिरोशिमा-नागासाकीवियतनामअंगोलाप्रभृतिषु देवेषु विध्वंसकास्त्राणि परमाण्वस्त्राणि क्षिपसि। तत्र त्वमेव बर्बरशासकः बंगदेशनिर्माणं तवैव चातुर्यम्। भारतविभाजनं तवैव विलक्षणा कृतिः। देशोद्धार-कस्त्वमेव, देशघातकोऽपि त्वमेव।

अरसिकस्त्वं साहित्यं नैव रक्षसि। अदीनस्त्वं सर्वदैव दीनान् दूषयसि। कृपणस्त्वं दीनवचांसि नैव शृणोसि। निष्कृप ! कृपाणे तवैव वासः। लोकमरणं तव विलासः। जन्म तव कुटिला लीला। विनाशः प्रकृतिः। करालजिह्व ! लीलयसि जीवजगत् त्वमेव। पीडा तव हासः। रोगास्त्वद्बान्धवाः। भूस्खलनं तवैव गतिः। प्रभञ्जनस्त्वच्छ्वासः। पीडितानां नेत्राश्रूणि त्वत्कृते जलाञ्जलयः। अङ्गरागेण इव शरीराणि सविकाराणि त्वयैव क्रियन्ते। जलानीव जडान्यपि त्वयैव क्षारीक्रियन्ते।

नेत्रापहारिन्। दुष्टाञ्जनरूप ! तीक्ष्णार्कदुग्धसहोदर ! अन्धं करोषि जगत्। विरूपाक्षस्त्वमेव कामं यथारुचिनर्तयसि। चक्रधर ! सिंहिकासुतं अमरमुखं करोषि। सज्जनान् पीडयसि भृशम्। दुष्टान् संवर्द्धयसि भोः कृतघ्न। भगवत्पराः क्रियन्ते त्वयैव

विधवाः। कुलटाः सर्वविधसुखैः रक्ष्यन्ते। कालोऽस्मीति गीतोक्तं तव वचः पारमार्थिकमवितथमिति किमतः परम्! नास्ति तव महिम्नः पारम्।

## (४) पूर्णकुम्भः

अथैकादशतारिकायां जनवरीमासस्य सप्तसप्तत्युत्तरैकोनविंशतितमे खृष्टाब्दे प्रातरेव मन्दं मन्दं गर्जत्सु वर्षत्सु च मेघेषु रिक्शायानमधिरुह्य समागतोऽहं धूम्रयानविरामस्थले शिवारण्यपुरस्य[1]। अष्टावन्तेवासिनोऽस्मदीया अपि तत्रासन्नस्माकं प्रतीक्षायाम्। कालेन प्रचलिते याने बहुभिर्गङ्गादेव्या जयकारः कृतो, येन सकलो यात्रिकलोक उत्कर्ण इव, चमत्कृत इवाजायत। सत्यप्यारक्षणेऽस्माकं कक्षे सर्व एवारक्षिता इवातिष्ठन्। कस्य स्थानं क्वास्ति, कस्य वा सामग्री क्वेति ज्ञातुं कस्यापि सामर्थ्यन्नासीत्।

धूम्रशकटिकाऽपि मन्ये लोकभाराक्रान्तेव, महाभोगेव भुजगी, तमोगुणस्य क्रूरसेनेव, मूर्तिश्शनेरिव, कलिरूपीणीव, शुष्कतां स्थूलतामागतेव कालिन्दी, दक्षिणतो गच्छन्त्युत्तरं सम्भोगखिन्नोरगीव, अरण्यं त्यक्त्वा जनसङ्कुले कोलाहलपरिपूर्णे नगरे गन्तुमन्यमनस्केव, पञ्चाग्नितपस्तप्तेव तापसी, पितृवेश्मनो गृहीता बलान्नीयमानेव दाक्षिणात्ययुवती, राहुशिरश्च्छेदरोषदग्धे सिंहिका, पापानि पुण्यसलिलायै भागीरथ्यै निवेदयितुकामेव, पापभारभीतेव मन्दं प्रचलिता 'इलाहाबाद एक्सप्रेस' नाम्नी मन्दगामिनी वराकी।

---

१. सहारनपुरस्य

द्वादशतारिकायां नववादनकाले प्रातस्त्यक्ताऽस्माभिश्शकटिकैषा। अस्मान्विहायैव क्रूरहृदयेव, पुंश्चलीवार्थप्रियेव वारवनिता, नवरस-रुचिरिव भ्रमरमाला, त्यक्तस्वार्थेव, मानिनीव गता 'इलाहाबाद' नगरं प्रति। वयञ्च लब्धश्वासा अपरस्या आगमने प्रतीक्षापरास्तत्रैव 'प्रयाग-स्टेशने' स्थिताः। ततोऽप्येकादशवादनकाले चलिता वाष्प-शकटिकयाऽन्यया। दशक्षणैरेव 'प्रयागघाट' इति स्थाने अवतीर्य तस्य विश्रामस्थलस्य नवनिर्मितस्य शोभां निपीय नयनाभ्यां भार-वाहकैः साकं वहिरायाताः प्रदर्श्य तत्रस्थान्नियुक्तान्पुरुषान् विसूचिका-प्रमाणपत्रम्। बुभुक्षाऽऽसीत्। क्षुधार्त्तानामस्माकं कृते तदा कपाटा अपि पर्पटा आसन्। यथारुचि भुक्त्वा, पीत्वा च पानीयमरक्षित-प्रायेण 'रिक्शाभासेन' यानेन कुम्भनगरमायाताः। कुम्भनगरं पर्वकाले पूर्णकुम्भेऽस्थायिरूपेण निर्मितं विस्तृते भूखण्डे।

त्रयोदशतारिका प्रत्यागमनार्थं व्यतीताऽऽरक्षणे। मकरसंक्रान्तौ सत्यपि गङ्गातटे तद्दर्शनान्यपि दुर्लभानि जातानीत्यखिद्यतास्माकं चेतः।

चतुर्दशतारिकायां प्रातर्नववादनकाले सङ्गमावगाहनार्थं स्वकीयाद् 'भारतस्काउट एण्ड गाइड्स उत्तरप्रदेशमण्डपात्' गताः। राजमार्गे गतागतानां स्त्रीपुरुषाणां गमनागमनं व्यलोकि। विविधेभ्यः प्रान्तेभ्यः समायाताः केचन बद्धोष्णीषा लम्बकूर्चाः श्मश्रुवन्तो धृतयज्ञोपवीताश्चन्दनतिलकभूषिता गृहीतगङ्गाजलपात्राः, केचन मुण्डितकेशा बद्धशिखाः, अस्थिपञ्जरावशिष्टाः, केचन लम्बोदराः परद्वेषविषयाः, केचन वामना अन्यैरुत्कन्धरैरनवलोकिताः, प्राणभिया त्वरितं गच्छन्तः, केचन सकमण्डलवः समुद्रतरङ्गा इव तटाभि-लाषाः, केचन जनसम्मर्दमृदितसम्पिण्डिताङ्गा गौराः सोत्तरीयाः कालाः दाक्षिणात्या, आन्ध्र-राजस्थान-बिहार-गुर्जर-बंग-मध्यप्रदेश-कर्नाटक-कश्मीरस्थाः सवधूकाः समातृकाः सपितृकाः सहर्षं सेर्ष्यं सशैथिल्यं सोत्साहं सनिर्वेदं यथावसरं यान्ति।

येन केन प्रकारेणाघातेषु पतन्त उत्पतन्तः सङ्गमस्थलं प्राप्ताः। तत्र मन्ये गम्भीरनीरा कालिन्दी स्वगाम्भीर्येणैव मन्दं जिगमिषति। जाने स्वसैकते भगवतो नन्दनन्दनस्य व्रजाङ्गनावल्लभस्य मधुद्विषः केलिक्रियाः संस्मृत्य संमुखस्थां भगवतीं भागीरथीं विलोक्य पुरातन-मोहाविष्टेव, मन्दप्रभावेवाग्रे पृष्ठतो वा गन्तुमशक्तेवोद्भिन्नयौवने-वानुजाग्रजां समक्षमवलोक्य स्तम्भितेव कच्छपगतिं गृह्णन्तीव, क्वापि कालियविषमूर्च्छितेव, एतावन्तं जनलोकं विलोक्य चमत्कृतेव, स्वनाशभयभीतेव याति यमुना। इतश्च गङ्गाऽनुजानिरीक्षणार्थमेव मन्ये द्रुततरमायाति। दुग्धविषयोर्ज्योत्स्नाकृष्णमेघयोः सङ्गतिरि-वायं सङ्गमः।

यमुनायां सरस्वती-तटात् सहस्रद्वयमिता नावः सङ्गममायान्ति ततश्च यान्ति। मन्ये स्वभुजैर्भगवती कलिन्दतनया गङ्गा कण्ठा-श्लेषं चिकीर्षति। गङ्गायमुनयोस्तटेष्वसंख्यातानि नरमुण्डकान्येव दृश्यन्ते। निमज्जन्त उन्मज्जन्तो जना एकस्मिन्नप्यवगाहने स्वर्ग-सोपानप्राप्तिं मन्यमाना मुहुर्मुहुः स्नानमाचरन्ति।

वस्तुतः कुम्भाख्यं पर्वास्ति साधूनामेव। अथैतेषां दर्शनाय भवन्तोऽपि सादरमामन्त्रिताः। आगम्यतामवलोक्यताञ्चास्माभिः सहैव साधुसंसारः। इयमेका साधुसेना समायाति। एतेषु कोऽपि खलीनकटकरहितमेवाश्वं वाहनीकरोति। कश्चिद्दीर्घदशनः, कश्चि-न्निर्दय इव क्रूर इ. कृपाणपाणिः, कश्चित् पदातिरेवोत्प्लुत्य कपिरिव याति, केचन दर्शनोत्सुकां भक्तश्रेणीं स्वकृपाकटाक्षेण तोषयन्त-श्चलन्ति, केऽपि परशुना जामदग्न्यवपुर्विडम्बयन्ति, केचन यमितजटा केचन लम्बजटा. केचन कौपीनगुप्ताङ्गाः। सर्वान्ते चैतेषां सम्प्रदाय-गुरुश्शिविकारूढः कृत्रिमस्मितेनाभयमुद्रया चालङ्कृतः सिष्णासुर्याति।

इयमन्या साधुमण्डलश्रीः। अत्र केचन रजतवेत्रदण्डहस्ता द्वारपाला इव विष्णुलोकस्य, केचन त्रिशूलधराश्शैवा इव, केचन

चन्दनचर्चिताः श्रीखण्डप्रिया इव, बहवः पद्मचारिणीमालिकाभरणा, केचन सम्प्रदायसम्मतानि तिलकान्यनेकरूपाणि ललाटपट्टेषु रचयन्तः, केचन कौशेयवाससः सन्ति। एतेषामेते सन्ति गुरुपादाः संरक्षकाः। एषामुपरि चामरकलाप उद्धूयते, सुवर्णतारखचितानि रजतदण्ड च्छत्राणि तन्यन्ते। अमीषामासनानि, रजतनिर्मिताशिविकाः, अलङ्कृता गजाः, निर्मला दृष्टिः—इति सर्वं विलोक्य चमत्कृतं भवति चक्षुः।

एते च त्यक्तवस्त्रा दिगम्बराः, सर्वाङ्गलिप्तरजसो, मादकद्रव्याणि भुक्त्वा, कृतधूम्रपानाः, गृहीतविजयाः, स्वीकृततरितास्तमाखुसेविनः, स्वीय एव ध्याने चलन्तो निस्पृहा इव, लज्जादिभ्यः सभ्यशिष्टजनगुणेभ्यो बहिष्कृता इव घूर्णितनयनाः, केचनाल्पवयसो द्रव्यग्रहगृहीता इव, अर्धनिमीलिताक्षा अपि कामकलाशून्याः, महत्साधनसम्पन्ना अपि नग्नाः, नारीविरहिता अपि स्त्रीभिः सश्रद्धमवलोकिताः, सचन्दना अपि सतिलका, शक्तिसहिता अपि रिक्तहस्ताः, सश्रीका अपि भस्माङ्गरागाः, दोर्दण्डमण्डिता अपि शून्यकराः, दीर्घकर्णा अप्यखराः, काननरुचयोऽपि वनविहारानभिज्ञाः, नग्नपादा नागाभिधाना नागरूपा गच्छन्ति।

अत्रैवास्ति स्त्रैणमप्येकम्। गैरिकवस्त्रधारिण्य एता मुक्तजटाः, वलीमुख्यः इव वलीमुख्यः, कलेः कला इव विकलाः, सधवा विधवेति भेदमतीत्य संसारमोहं हित्वाऽऽत्मानं वञ्चयित्वा, यत्किमपि गायन्त्यो 'गुरोर्जयशब्दम्' उच्चैरुच्चार्य कृतसाहसग्लानिं गङ्गास्नानेन दूरीकर्तुमभिलषन्त्य इव यान्ति नानाकारस्वभावाः स्त्रियः।

एतेषामुपर्युक्तानां साधूनामियं यात्रा 'साई' (शाही इति पदस्य राजसीत्यर्थकस्य विकृतं रूपं) इति कथ्यते। इयं स्नानार्थं गता। साम्प्रतं कृतस्नानानेतान् साधून् दिदृक्षवोऽसंख्यजनाः स्थानं गृहीत्वोपविष्टाः स्थिताश्च। अधिकारिवर्गैरस्थायिमार्गा निर्मापिताः। लम्बकाष्ठनिर्मितेषु दृढरज्जुबन्धैश्च सुरक्षितेषु सर्वत्र सुमार्गेषु कर्तव्यपरायणाः स्वयंसेवका राजपुरुषाश्च लोकसहाय्यार्थं तिष्ठन्ति।

इतस्ततः साधुयात्रया साकं संवादप्रेषणपरा अधिकृतपुरुषा अश्वारोहा विनैव तारेण सर्वाः सूचनाः स्वाधिकारिभ्यो ददति ।

दूरस्थिता एव भवन्तः स्नानानुमानमेतेषां कर्तुं समर्थाः। अनुमानतोऽवगाहनं कृत्वा त्वरितपदैरेव प्रत्यावर्तयन्त्येते । यथैव यान्ति तथैवायान्ति । कृताभिषेकाः क्रमशो गताः । गतेष्वेतेषु दर्शनोत्सुकानां भक्तिभावो द्रष्टव्यः । अनेके भूमिं स्पृशन्ति, बहवो रजःकणान् हस्ताभ्यां चिन्वन्ति, अन्ये लुठन्ति धरणीं, कियन्तश्चादरे बद्धाञ्जलयः केचनाश्रुपूरितनयनाः । साधुजनचरणधूलिदत्तचित्ता धन्या एते । किमतः परं वक्तव्यम् ।

कुम्भनगरे इयमस्ति विपणिरेका विस्तृता । अत्र दैनिकव्यवहारोपयोगि सर्वमेव वस्तुजातं प्राप्यते । सर्वकारेण विषत्वेन घोषितानि धूम्रवर्तिकानामानि रूपाणि च विक्रीयन्ते । प्रत्यक्षमिह सुरापिता तु नास्ति तत्राक्षेपः कर्तुं शक्यते । अत्रापि मार्गेषु परिवार-नियोजनविज्ञापनानि, अनुशासनोपदेशः, श्रमप्रचारलेखपंक्तिः, पञ्च वा विंशतिः वा सूत्राणि, पुरुषेभ्यः शौचालयो मूत्रालयस्तथैव स्त्रीभ्योऽपि पृथगेवैतत्सर्वं लिखितमस्ति । नगरे सर्वविधभोजनं, विहाय मांसं, शाकं, मिष्टान्नं, चायादिकं नियतमूल्येनैव मिलति ।

हरिजनतः शङ्कराचार्यं यावत्सर्वेषां मतानां सम्प्रदायानाञ्च स्थानानि सुरक्षितानि सन्ति । वंशनिर्मितानि कुटीराणि, केषाञ्चिदाधुनिकभवगतां बहुरूपाणां सुसमृद्धाः शालाः, कल्पवासप्रवृत्तानां वासकुटीराः, विंशतिशतीभुवां योगशास्त्रज्ञानां बृहदकाराः कारागृहा इव गृहा अत्याधुनिक सामग्रीपरिपूरिताः, क्वचिद् ब्रह्मकुमारिकाणांतच्छास्त्रसम्मतो वाग्व्यापारः, क्वचित्कस्यचिद्भगवतः शिष्याणां कोलाहलः, क्वचित्केचन धर्मोपदेशका अधार्मिकाः, क्वचिद्विदेशेभ्यः समागता गौराङ्गा कृतभारतीयवेषा रामकृष्णसमुपासकाः, आंग्ल-

भाषाविशारदाः, क्वचिद् गीताभारती, क्वचिद् वेदध्वनिः, क्वचि-च्छतचण्डी, क्वचिन्महाभारते शास्त्रार्थः, क्वचिन्मूर्तिमतीवाकाशवाणी उच्चकाष्ठासनोपविष्टा, क्वचिदस्पष्टो घोषः, क्वचिद्विविधवाद्य-सङ्गीतलहरिका, सत्यपि तीर्थस्थले विलाससाधनानि, परिवार-नियोजनोपचारेषु निरोधो न तु चित्तवृत्तेः, सन्ततिच्छेदे लाभावलिः, पुस्तकपण्यवीथिकासु वेदादिशास्त्राणि, भारतादिचलचित्रान्तानि पुस्तकानि, क्वचित् कोकशास्त्र-बृहदिन्द्रजाल-यक्षिणीभैरवी सिद्धि-कामसूत्र-प्रेमपत्रादीनि सुस्पष्टाक्षरवाच्यानि विलोक्यन्ते। मन्ये, अत्र समागतेभ्यः सर्वेभ्य एव भगवान्भूतभावनस्तीर्थरूपः पदार्थान् वित-रति तीर्थरूपो दग्धोदरपूरणाय। न कोऽप्यत्र क्षुधार्त्तः। कश्चिद् गृह्णाति स्वयमेव, कश्चित्पापधीर्वञ्चयत्यन्यान् येन केनापि प्रकारेण।

अस्मिन् वर्षे गङ्गा प्रवाहद्वये प्रवहति येन गङ्गाद्वीपः सञ्जातः। तत्रैव गङ्गाद्वीपे सुरक्षाकारिताः राजपुरुषाः, कोट्टपालाः, न्यायाधीशाः सन्ति क्षेत्रानुरूपाः। उपरिष्टाद्वर्णितानि वस्तूनि सन्त्यत्रापि। मुख्यतः सम्मेलनक्षेत्रे रक्तकृष्णमार्गौ निर्मितौ। सर्वत्र शृङ्गाट-केषूच्चैः काष्ठमञ्चस्थिता राजपुरुषा, धृतवस्त्राः, सोष्णीषाः, सहजरूपेणैव गालिदानपरायणा अपि साम्प्रतं कोमलवाचस्तारतारं चीत्काराद् घर्घरस्वराः, कराग्रस्थितध्वनिविस्तारकवाग्यन्त्राः, सर्वदैव 'वामतः एकतो दक्षिणतः शीघ्रं चलन्तु चलन्तु-' प्रभृतीन् शब्दाननवरतमुच्चारयन्त अत एव वातपीडिता इव, निरन्तरसम्मुख-दृष्टयो कृतानिमेषव्रतनिश्चयाः, केचन वज्रनिर्मितेषु सोपानपंक्ति-समालिङ्गितेषु मञ्चेषु दीर्घश्मश्रवो राजपुरुषाः परिभ्रमन्तः, क्वचि-च्चतुष्पथेषु स्वयंसेवका बालचरा अहर्निशं हस्तसङ्केतदानपराः युवानः क्वचित्कामपि जरठां जर्जराङ्गीं गङ्गावगाहनैकविषयिणीं जीवितां जीवनमुक्तामिव केचन सेवाभावभरिता इलाहाबाद-विश्व-विद्यालयीया एन०एस०एस०-छात्राः स्कन्धैर्गङ्गातटं प्रापयन्ति। किं किं वर्ण्यन्ते! सर्वाण्याश्चर्यकार्याणि सन्तीह! कोटिद्वयसंख्यातो-

ऽप्यधिका जनाः केनापि नाहूताः परं समायाताः स्वयमेवेति किन्नास्ति परमाश्चर्यविषयः ?

सम्मेलनक्षेत्रे एकोऽस्ति नियन्त्रणकक्षः। अस्मादेव स्थानादधिकारिभिः सम्मेलनस्य सर्वाणि स्थानानि गतागतानि च नियन्त्र्यन्ते। अस्यान्तिमे खण्डे दूरभाष-दूरदर्शनादीनि संलग्नानि। सर्वथा सुरक्षितोऽयं कक्षः। अस्यैव निकटे शिविरद्वये सम्मेलनतीर्थपरिभ्रष्टा अबालवृद्धा एकत्रिताः सन्ति। स्त्रीशिविरे सन्ति कन्याः बालास्तरुण्यः प्रौढा जरठाश्च। अत्रत्येषु सहायकेषु केचन लेखकाश्चित्रगुप्ताः, केचन लेखहराः, केचन संवादवाचका उद्घोषकाः, स्वशक्त्यनुसारं बुद्ध्यनुसारञ्च कुर्वन्ति साहाय्यम्। काश्चन स्त्रियोऽपीतस्ततः परिभ्रमन्त्यधिकम्। शिविरद्वयमेव दीनानाथविपन्नशरणमिव प्रतिभाति। ध्वनियन्त्राणामत्र सर्वदा कोलाहलो भवति। उद्घोषकेषु केचिद् ह्रस्वदीर्घप्लुतेषु कुर्वन्त्यनाचारम्। स्थानप्रयत्नभेदशून्या एते मुहुर्मुहु स्वशिविरसंस्थापकसंस्थाया नाम उच्चारयन्ति, पथभ्रष्टानान्तु प्रत्याहारविधिनैव, येन श्रुत्वाप्येतेषां वागाडम्बरं साधारणो जनो नैव समर्थोऽस्ति ज्ञातुं यत्किमेतैः कथितम् ? ईश्वरस्तेषां साक्षी केवलम्।

एतावति विस्तृते जनाकीर्णे स्थाने सत्स्वपि मिष्टान्नेषु निर्मक्षिकम्, सत्यपि पयसि मशकदंशाभावः, विद्युद्दीपमालिकास्वपि शलभानां लोपः, महत्स्वपि जनाघातेषु न चास्थिभङ्गः, कदशनेऽपि विसूचिकाभावः, कुमार्गगमनेष्वपि स्वमार्गानुसरणम्, विषपानेऽप्यमृतरसः, निम्नगास्नानेऽपि मनस्तोष इति चित्रमेव। यत्र च भैमीविरहपतित इव कश्चिन्नलः ससीत्कारमनवरतं रोदितीव लक्ष्यते। क्वचिन्निरोधो जनसमुद्रस्यार्गलाबन्धैः, परिवारनियोजनं प्रपत्रेषु न गृहस्थेषु, सहानुभूतिर्गमने न कष्टदशापतितेषु, स्नेहव्यक्तिः कृत्रिमालेपनसहितेषु मुखेषु न दीपहृदयेषु, बालापहरणमेकहायनेषु

न कामिजनेषु, कूपप्रपारामकथनं कथासु न प्रजासु, करदर्शनं तीर्थे न प्रभाते।

गङ्गाद्वीपस्य पूर्वस्यां दिशि तटस्थिते 'झूसी' ग्रामे समुद्रकूपः कस्य मनो न हरति ? पुराणवर्णितमहत्त्वस्य, लोकवाचि चतुर्दशसहस्र-वर्षपुराणस्य जलाभिलाषुकेभ्यो भीतभीतस्यात एव दुर्गैकशरणस्य, सर्वशुद्धस्य, पुण्यतोयस्य प्रकामं पीयते पयः पुण्यार्थिभिः। अयं हि कूपः श्रीमन्नारायणचरणारविन्दमधुव्रत इव सरसः, आदिमध्यान्त-हीनविश्वेश्वरप्रभावात्स्वयमपि देवरूपो वर्तुलः, ब्रह्माण्डोदरमिव, गम्भीरादर्श इव गगनश्रियः, जलपरिपूर्णपातालतोरण इव, कामुक इवान्तस्तरलः, उत्खातबृहद्यूप इव भूमिखण्डः, निर्गतशिवलिङ्ग-इवाचलतलः, उदधिसतीर्थ्य इव, त्रिविक्रमविक्रमजातः गर्त इव, पयः पात्रमिव वसुन्धरायाः, अमृतद्रवभृङ्गार इव रसातलदेव्या अवश्यमेव द्रष्टव्यः।

यमुनाया वामतटेऽशोकदुर्गस्य संरक्षकत्वेन शेरते भगवन्तो हनुमन्तः। मन्ये रामराज्यकालेऽतिक्रान्ते विगतचिन्ताभराः स्वच्छन्दं ससुखं तुरीयावस्थायां रामध्यानपरास्तिष्ठन्ति। एतेषां ब्रह्म-स्वरूपाणां दिव्यप्रभावाणां दर्शनैः कियन्तः पुण्यवन्तः सुकृतार्जनं न कुर्वन्ति।

चतुर्दशतारिकातः षोडशतारिकां यावदेतत्सर्वं सम्यग् विलोक्य सप्तदशतारिकायां वयं स्वगृहमागताः। प्रत्यावर्तने समापतितानां क्लेशानां विस्तरभियोल्लेखो न क्रियते।

कुम्भनाम्ना प्रसिद्धस्य विश्ववन्द्यस्य महत्तमस्य सम्मेलनस्य रूपं विश्वरूपायते। अस्य दर्शनं, अस्य कथाश्रवणं यथामति यथाशक्ति यथाकालं कार्यमित्येवोक्त्वा विरम्यते।

# (५) नैनीतालश्रीः

सप्तसप्तत्युत्तरैकोनविंशतिशततमे ईशवीये वर्षे जूनमासे शीतला-क्षेत्रादागच्छता गृहं, मया नैनीतालदर्शनेऽरुचिरुत्पादिता। भवालीतः 'बस'यानेन रूप्यकत्रयेण घण्टार्धेन च प्राप्तो गन्तव्यमहम्। बसविश्रा-मस्थलान्नातिदूरादेव मलिनाम्बरा अपि अप्रावृड्दिवसा, धृतशिर-स्त्राणा अपि दर्शितशिरोरुहाः, श्रमवन्तोऽपि दारिद्र्यमूर्तयः, सरल-हृदया अहर्निशं विविधजनसम्पर्कपरायणाः सत्यधना मितभाषिणो दृढरज्जूपहिता अपि बन्धनरहिताः, न्युब्जीकृतगात्रा अपि दृढमेरुदण्डा अनवरतपाषाणभूमिगतागतैः पाषाणा इव ग्रीष्मशीतवर्षासु अचलाः, धर्मराजकिंकरा इव विविधरूपाः पर्वतपुत्रा भारवाहकाः स्वकीयं संख्यापरिचयलौहपत्रं बसगवाक्षेषु क्षिपन्ति, साकमेव यानेन धावन्ति 'कुली-कुलीति' ध्वनिनाकर्षन्ति यात्रिकचेतांसि। मलिनरूपमपि सगुणं तल्लौहपत्रं यदि केनचित् स्वीक्रियते तदा तेषामाननानि विकसितानि भवन्ति।

एतच्च यानं स्थितं स्वीये स्थाने। अवतरन्ति जनाः। भारवाहकाः स्थिताः। यथारुचि यथाक्रममेते समायान्ति गृह्णन्ति च आगन्तुकानां पर्वतश्रीदिदृक्षूणां वस्तुजातम्। पूर्वं तोलयन्ति नेत्रतुलया, तदनु हस्ताभ्याम्। अतः प्रारभेते एषां वाचो युक्तिप्रयुक्ती, "अयि बाबो! एतवतो भारस्य केवल पञ्चैव रूप्यकाणि? नैव सप्त दीयताम्, षड् वा दातुमिच्छन्ति? अस्मिन् समये किमायाति रूप्यके? देहीति ब्रुवाणा भारं रज्जुभिर्दृढतरं बद्ध्वा भूमौ संस्थाप्य, स्वयमुपविश्य रज्जुपाशान् स्कन्धयोः, पेटिकाकारं दामखण्डं मस्तके कृत्वा चलन्ति मन्दपदैः। तेषामतिथिरयं पदातिरेव चलति।

'नैनीताल' इति नाम्ना प्रसिद्धस्य मुख्यया वृत्त्या तटाकरूपोऽर्थो बोध्यते, सत्यम्। सरोवरस्य निम्नस्तटस्तल्लीतालनाम्ना उच्चश्च

मल्लीतालाभिधानेन प्रसिद्धः। बसविरामस्तु तल्लीतालोपकण्ठ एव विद्यते।

अयं हि सरोवरः पर्वतदेवीनां वृहज्जलद्रोणीव पर्वतश्री-अभिषेक-पूत इव, सागरानुज इव, मानससहोदर इव, तार्किक इवाज्ञातभेदः अतलवार्ताशुश्रूषुरिव तत्समीपं गतः इव भूतलः, अमृताक्षयभाण्डार इव, महानीलद्रवपरिपूर्ण इव, आदर्श इव गगनस्य, सागराणां मूलाकार इव, वारिमुचामतितमां साहाय्यसम्पादक इव, अचलश्रीप्रक्षालक इव, महाकारत्वादच्छोदानुकारी, अगस्त्य-अचलकरचुलुकाचमनीय इव सिन्धुः, अपरो नौकाबन्ध इव नगपतिललाटाभिषेकावशिष्ट-सलिलाशय इव, यादोगणैः परिवृत्त इव, वरुणालयः, नैनादेव्याः पूतनयननिर्मल इव, अपरिमेयजलराशिः। अस्मिन्निर्विकारात्मके चित्ते भाव इव, पाषाणखण्डेषु मणिरिव, गुरुनिन्दकेषु पुण्यव्रत इव, शब्दसमूहे सदर्थ इव, करुणावरुणालये हरावानन्द इव, नितरां राजतेऽपामोघः।

आगम्यतामनुभूयतामस्माभिः सहैव नौकाविहारानन्दः। तटस्थिता वयमाकारयामो नाविकं नागरिकवृत्त्या मृदुस्वरेण। मन्ये दाशरथिसेवापुण्यपवित्रवंशस्य कैवर्तस्य स्वाभाविकीं सेवावृत्तिं स्मारं स्मारं नैते रामाराधननिपुणानां दलन्ति हृदयादि नौकर्ण-धाराः। आगता तरी तटे। आरूढा वयम्। प्रचलिता नौः। साम्प्रत-मवलोक्यतां नाव्यस्यास्य पयःपूरस्य लक्ष्मीः। स्वभावनिर्मलमपि गभीरत्वाद्धरितवर्णमिव, क्वचित् शोभाकलहंसानुजानां सम्पर्कात् कमलाननमिव, तत्पदपक्षव्याधूतं सोत्कलिकमिव यौवनं, क्वचित्पर्वत-च्छायया श्यामायमानमिव, क्वचिन्नीलीरागरञ्जितमिव, नौका-भिरितस्ततः परिक्षिप्तमिव शोभते वारि।

जलविहारप्रियाः पुरुषचतुष्टयस्थानयोग्यासु उडुपाकारासु नौकासु प्रायशो द्वित्रा एवोपविशन्ति जनाः। केचन समित्रा इव

दिवसाः, केचन कृतनवोद्वाहा सवधूकाः, केचन भ्रमणार्थिनो नवबान्धवा धृतयायावरवेषाः, गृहीतस्वल्पाहारा नौकासनमधितिष्ठन्ति। काचिन्नौस्त्रिपुरुषैः कुन्तीव युधिष्ठिरभीमार्जुनैः, द्वाभ्यां माद्रीव नकुलसहदेवाभ्याम् विनतेवारुणगरुडाभ्यां, एकेनैव कैवर्तेन सिंहीव सुपुत्रेण केसरिकिशोरेण, चतुर्भिश्चतुराननश्रीरिव पञ्चभिः पाण्डवैरिव पाञ्चाली शनै शनैर्याति। मध्येजलं कश्चिद्गायति गीतं, विरौति कश्चित्, फूत्करोति, धूम्रपानरतः कश्चित्, एकः कटाक्षेण दूरस्थितां कामपि युवतीं विलोकयति, कश्चित् खादति लीलया चणकानेव, कश्चिच्छून्यं पश्यति कश्चिद् दिग्भ्रान्त इव, 'चमत्कृत इव, निरन्तरं दृष्टिं क्षिपतीतस्तः। तल्लीतालतः मल्लीतालं मल्लीतालतश्च तल्लीतालमायान्ति यान्ति च नावः। एते वयमवतीर्णाः तारिकम् प्रतिजनं रूप्यमेकम् दत्वा भूमिम्।

साम्प्रतं परिभ्रमामः। मल्लीतालत ऊर्ध्वं विस्तृते समतले भूतले विपणिकैका विराजते। यस्यामारकूटनिर्मितानामनेकरूपाणां पात्राणां रौप्यपदार्थानां, मालिकानां, गण्डकानां, क्रीडनकादीनां विक्रयः क्रियते पर्वतपुत्रिभिस्तिब्बतवासिनीभिर्गौरीभिरिव गौरिभिर्दृढशरीराभिः सूक्ष्माक्षीभिर्वर्तुलाननाभिः। एका विपणिरस्ति खाद्यपदार्थानाम्। आभिक्येन दधियुताः पक्ववटिका मरीचिमिश्राः कल्ककलंकिता गोलवटका अपूपा मल्लपूपाः शष्कुल्यः कर्चरिकाः डोसा हिंसीकृताः पदार्था स्वादं स्वादं गृह्यन्ते खाद्यन्ते च। अत्र कश्चिन्नरो लेढि स्वाङ्गुलीः भोज्यवस्त्वभावे, खाद्यपदार्थेषु विलम्बत उपस्थितेषु गृद्धा इव शवमांसे पतन्ति जना ओष्ठचञ्चुचालनपराः। कश्चिद् बुभुक्षितः पतति दूषितभोजने, कश्चिद्दूरत अवलोकतत्यतिकृपणः, कश्चित्प्रियाचरणकमलचञ्चरीक उच्छिष्टममृतबुद्ध्या सादरं सप्रेम मुखार्पितं करोति, कश्चिद् ग्रामीणश्चीनपात्राणि जिह्वया शोधयति। अत्रत्यानां काचगलास्यानां स्नेहसम्पर्कादन्धत्वं, पात्राणाञ्चाशुद्धिः

पृथगेव दृश्यते। परन्न तत्र कस्यापि बुभुक्षोर्दृष्टिः पतति। मिथ्याहाराणां एषां दुष्टाहार एव सुहृत्। अत्रैवैकतो मिष्टकारः। तस्य सम्मुखं तिष्ठन्ति जनाः कुण्डलिनीप्रबोधका योगिन इव कुण्डलिनीप्रियाः, पिपीलका इव मिष्टाभिलाषुकाः, दध्ना साकं गृह्णन्ति खादन्ति च शुद्धघृतनिर्मिताः कुण्डलिनीः।

नैनादेव्या मन्दिरप्राङ्गणे सपादत्राणा एव परिभ्रमन्ति बहवो दर्शितकपटभक्तिभावाः सुन्दरीदर्शनदत्तलोचनाः कामात्मानः कामरूपा कुपुरुषाः सायंकाले, बहवो गृह्णन्ति प्रसादं, कुर्वन्ति देवीदर्शनं, मिलन्ति प्रियजनैः साकं, केचन अङ्क-स्कन्धारूढेभ्यः पृथुकेभ्यो वादयन्ति घण्टाम्। तत्रैवानेके पारं गन्तुकामा नावं गृह्णन्ति।

एतदस्ति महाभवनमेकम्। त्रिशतपणकप्रवेशपत्रैः प्रविष्टा अत्र पश्यन्ति 'स्केटिंग' क्रीडाम्। धृतपादतलचक्रकाष्ठा अस्मिन्न काष्ठमयकुट्टिमक्लिष्टकलेवरे भवने धावन्ति, पतन्ति, चलन्ति, रिंगन्ति 'स्केटिंग' प्रियास्तरुणास्तरुण्यश्च। अस्य भवनस्य वर्द्धते भूयसी भूषा निशामुख एवेति स्मरणीयम्।

अयमेकतो ब्रह्माकुमारिकाणां मण्डपः। अस्मिन् दर्शकानां गतागतं, चाकचिक्ययुता दृष्टिः, केषाञ्चित्तर्कमयी वाणी, बहूनामुपेक्षाभावः, अन्येषां परिहासभावः, एकेषां ब्रह्माकुमारिकादीर्घापांगकज्जले निमेषरहिते नयने—इत्यपि भवद्भिरवलोकनीयमश्यमेव। अत्रत्यानां शिक्षकोपदेशकानाञ्च वक्तृतामदूरदर्शितामशास्त्रसम्मतां वाचं वीक्ष्य निशम्य च खिद्यते उद्विजते च जिज्ञासूनां सरलं चेतः। एषां कालगणनां, युगपरिवर्तनं, शिवशङ्करयोः भेदम्, आत्मनः स्वरूपं, पुनर्जन्ममतिम्, अन्यानि चासंख्यातानि अज्ञानतत्त्वानि नाभिनन्दति हृदयमस्मदीयमपि। मण्डपसज्जा नयनहरीति सत्यम्। दम्पत्योः सम्बन्धमेते भ्रातृभगिन्योः सम्बन्धमिव स्वीकुर्वन्ति मूढा मन्ये अधीतयमयमीसंवादाः। इदमेव दुर्भाग्यं देशस्य, यदत्र धर्मकंचुकाच्छन्न शरीरा भुजंगा धर्मपथोपदेष्टारः, अन्धा नेतारः, वञ्चकाः दातारः,

चौरा रसभोक्तारः, धर्मपरायणा अर्धचन्द्रेण तिरस्कृता जाताः, कृत्या रमासनस्था पूजिता।

अस्मिन्नेव क्षेत्रे एकतो हिण्डोललीला सायं, अपरतो दिवसे कन्दुकक्रीडा, एकस्मिन् वज्रनिर्मिते वर्तुलाकारे स्तम्भचयविराजिते सोपानमण्डिते मञ्चे अनवरतं कोणाघातैः पटहं, नखांगुलीभिश्च तानपूरं तुम्बुरं त्रितन्त्रीं, हस्ताभ्यां झर्झरमञ्जीरौ, यष्टिभ्याम् जलयन्त्रं, करतलाभ्यां ढोलमृदंगाङ्क्यान् मुखवायुना वंशीं, किञ्च हस्तवाद्यं वायुवाद्यं वादयन्ति नवागन्तुकानां मनोरञ्जनार्थं रक्त-पीतसुवर्णवस्त्रसज्जिता वादकाः। तेषामस्पष्टोऽपि ध्वनिर्मनांसि, तेषां रूपं नयनानि आकर्षति।

अत्रैवैकतः करग्रहशक्तिपरीक्षणयन्त्रं स्थापयित्वा स्थितस्तत् स्वामी। दशपणकैः क्रियते बलस्य परीक्षा, (पूर्वं कदाचित् पञ्चभिरेव पणकैर्भवति स्म), बहवस्तत्र समायान्ति अग्रहस्तद्वयाभ्यां दाम्यन्ति यन्त्रहस्तं क्लिश्यन्ति च। पञ्चशताङ्कादूर्ध्वं यन्त्रसूचि-कायां गतायां दशपणकानान्नैव सम्भवति हानिः। परमेवंविधा बलिष्ठाः स्वल्पसंख्यायामेव दृश्यन्ते। यदि सर्वं एवतादृशाः स्यु-तस्दास्य मूल्यवतो यन्त्रस्य वराकः स्वामी स्वकुटुम्बपोषणं कथं कर्तुं शक्तः स्यादिति विचार्यैव मन्ये भगवाञ्जगत्पतिस्तत्रानयति क्लैव्य-गुणविशिष्टान् बहून् यूनः। अस्यैव निकटमेको बालकश्चक्राकारेण तुलायन्त्रेण तोलयति जीवितानेव जनान्। एतदपि कर्म संध्यायामेव भवति।

भवन्तस्तल्लीतालतो मल्लीतालमायाता नौकया, परावर्तने राजमार्गेण गम्यताम। वामतो द्विखण्डास्त्रिखण्डा अपि गृहाकाराः पण्यगृहाः। दक्षिणतस्तटाकश्रीः। सम्प्रति निशाकालः। दक्षिणतः पर्वतस्थितानां वासभवनानां विद्युद्दीपप्रकाशो नागलोकमणिप्रभां स्मारयति। सरोवरजलपतितप्रतिबिम्बो बलादाकर्षति दर्शक-

नयनमीनान्। वामतः सर्वप्रकारसुसज्जितानि भवनानि, नीचैः खण्डे बहुविधाः सर्वसामग्रीपरिपूरिता विपणिकाः, उपरिष्टाच्चा-स्थायिनिवासयोग्यानि धनिकैर्भोग्यानि 'होटला'ख्यानि । अयं राजमार्गो 'माल' नाम्ना प्रसिद्धः। प्रायः सर्वेष्वेव पर्वतपर्यटन-नगरेषु मालमार्गो भवति।

अस्मिन् मालमार्गे बहवो नवविवाहिता, विविधवेषभूषिता युग्मचारिणश्चरन्ति निशीथं यावत्। कश्चन कृतकण्ठग्रहां प्रियां नयनाभिरामां स्खलन्तीमिव बाहुबन्धनालम्बनेन नयति गन्तव्यं, कश्चिन्निर्लज्ज इव सामाजिकबन्धनभञ्जक इव यत्किमपि करोति। यद्यप्यत्रागतानां रमणीनां, कृत्रिमसौंदर्यप्रसाधनसज्जितानां वर्णनं 'अनिर्वण्यं' परकलत्र'मिति न्यायान्न युज्यते, तथापि तटस्थबुद्ध्या किञ्चिच्चित्रणं क्रियते पाठकसौविध्यार्थम्। इयमेका मुक्तकेशी कर्तितकेशी पिशाचीव याति रक्ताधरदर्शितक्रूरभावा। इयमन्या शुष्कस्तनी कृत्रिमस्तनभावभरां कंचुलिकां परिधाय कञ्चुकिकारं निन्दन्तीव त्वरितपदैर्याति। एका दर्शितनिम्ननाभिर्वृथैव हसन्ती गच्छति, कापि विकटाकारा ताटकेव 'रिक्शा' यानमधिरुह्य बुभुक्षितेव पश्यति भारवाहकान्, काचिज्जघनगौरवान्मन्दं सञ्चरति कष्टप्रदपादत्राणा नियतचरणा महिषीव, काचित्खादन्ती गच्छति मूर्खा, काचिद् हसन्ती दर्शितोज्ज्वललम्बदशना नायक-स्कन्धं कराघातेन पीडयति, काचिदग्रे गच्छन्तं रुणद्धि स्ववाक्क-शाभिघातेनाश्वनायकं, काचित्सखीभिः साकं सहर्षं गच्छति मन्मथ-वशंवदेवाभिसारिका स्वाभीष्टं सुखप्रदं नायकं दूरंगमं पश्यन्तीव। अलमाभिश्चेतोहराभिः साम्प्रतम्। सर्वविधसाङ्कर्यमत्र लभ्यते।

भवद्भिर्यत्र-कुत्रापि रात्रिर्व्यतीता। सञ्जातः प्रातःकालः आगम्यतामस्माभिः सहैव 'चीन शिखरं' चाइनापीकाख्यम्। अष्ट-सहस्रफिटोच्छ्रायेऽस्मिन् शिखरेऽश्वद्वारेणापि गन्तुं शक्यते, यत्कृते

यथाकालं धनस्यावश्यकता, पद्भ्यां गमने तु कापि विशिष्टैव शोभा। अस्तु, अस्मात्स्थानात् सरोरूपं विहङ्गनयनमिव प्रतीयते। कदाचिदस्य शिखरस्य दशसहस्रफिटोत्तुङ्गत्वमासीत्। साधारणतः सार्द्धं घण्टात्रयमस्यां यात्रायां व्यतीतम्। द्वितीयञ्च शिखरं 'स्नोव्यू' नाम्ना प्रसिद्धमस्ति; अत्रापि प्रातर्गमनादेव लाभः। दूरवीक्षण-यन्त्रेण स्वचालितेन पञ्चविंशतिपणकैः 'रानीखेत-अलमोड़ा' प्रभृति स्थानानि दृश्यन्ते, भुशुण्डीलक्ष्यवधस्यापि सौविध्यं एतावतैव द्रव्येण प्राप्यते। इयं यात्रा प्रायशो घण्टाद्वयमिता। उभयत्रापि जलपानस्य समुचिता व्यवस्था।

नित्यकर्म निवृत्तम्। पुनरिदानीं भवन्तो मालमार्गमागताः। केवलमस्मिन् काले चित्रतुरगन्यायेनैव तुरंगद्रष्टारो बहवः पतितलून (पतलून) धारकाः भीतभीताः सम्मुखदत्तनयनाः वृद्धहृत्कम्पाः पातभिया कविकाकर्षणं विहायाश्वग्रीवादत्तबाहवः, अनभ्यासत्वाद् वाजिगमनादुच्छलन्तः कामुका इव संभोगं विडम्बयन्तः शिरसा वृथैव कृत्रिमशिरस्त्राणभारं वहन्तः, केचनातपोपनेत्रदूषितनयनाः, केचन मुण्डितश्मश्रवः केचन लम्बकेशत्वात्पौरुषदूषणा इव नारीरूपाः अश्वपतिना पदातिना नीयमानाश्चलन्त्यश्वारोहणकुतूहलहृतहृदया युवानः। युवानः केवलमवस्थया न तु स्वभावेन शरीरेण बलेन वा। अनुमानतोऽश्वानां शतत्रयमिह विद्यते। दत्तपटखण्डसंख्याकाः सर्वे तुरङ्गा वहन्ति जनान्।

अस्मात् स्थानादर्धगव्यूतिमात्रं गत्वा 'हनुमानगढ़ी' नाम्ना मन्दिरमेकं भगवतो मारुतेः प्रसिद्धम्। 'कैंची' स्थानस्य केनचिद् गैरिकवेषेण साधुना निर्मापितम्। सत्यां श्रद्धायां तत्रापि गन्तुं शक्यते। अत्र प्रदर्शनमाधिक्येन पूजाभावस्तु प्रायशः सर्वेषां न भवति। चतुर्भिर्नरैर्नीयमानासु रिक्शास्वपि केचन दर्शनोत्सुका आसते। एकस्मिन् मन्दिरे न जाने के सन्ति ते देवा इति स्पष्टतया नैव ज्ञायते, धनुषा श्रीरामस्य वेणुना नन्दनन्दनस्यानुमानं भवति। परमिह

नानुमानं रामकृष्णयोः। येऽपि भावनैव ते बन्दनीयाः।

एतानि परिभ्रमणस्थलानि समासेन वर्णितानि। अत्रत्यः शीतलो वायुः, पर्वतपुत्राणां सारल्यं, सरसो महिमा, धनस्य व्ययसाधनानि, बालमिष्टान्नं दुग्धमयाः पदार्थाः, बेडूकाफलादीनि फलानि, बहुजन सम्मेलनं, जनसुरक्षार्थं स्थितानां राजपुरुषाणां श्रमः, नौकागृहाः, तत्रैव क्वचिद्दुरोदरक्रीडा, अश्वधावनं, पर्वतोयसौन्दर्यं, नैनादेव्या दर्शनं--किं किन्नास्ति रामणीयकम्? मन्ये नैनीतालस्य पापताप-राहित्यमवलोक्यैव भीतभीत इव तस्मात्प्रदेशाद् बहिरेव तिष्ठति ग्रीष्मर्तुः, वर्षासु मेघालम्बितमस्य रूपं कस्य मनो न हरति? नगश्री श्वासा इव दृश्यन्ते मेघाः। मन्ये परिपीताधिकसागरजला अजीर्ण-ग्रस्ता इव स्वास्थ्याय अधिकं कालं स्थातुमिहैव वाञ्छन्ति वर्षा-मेघाः। मन्ये चिरयौवना नवीना कुसुमरोमोद्गमा सिताम्बरा घनाश्लेषार्थमेवाचलयुवानं प्राप्य त्यक्तुन्नेच्छत्युत्सवरम्या शरत्। नूनं शिशिरदूत इव शनकैः समायाति हेमन्तकालः शैत्यसन्देशप्रद इव। ऋतुराजो राजते वसन्तः स्वसमाजेन नितरामिहैव। परमरम्या नगस्थली नैनीतालस्य।

अस्मात् स्थानात् को वा गन्तुमिच्छति क्वचित्? परं संसार-सम्बन्धव्यग्रचित्ताः सर्वेऽत्रागच्छन्ति मनःशान्त्यै आवर्तन्ते च। वयमपि ६ ओक पार्के कानिचिद्दिवसानि व्यतीत्य दक्षतरहरिनारायण दीक्षितमहामहाभागानां, तत्रैव राजकीयस्नातकमहाविद्यालये संस्कृतलक्ष्यचराणामातिथ्यमंगीकृत्य तं प्रदेशमुज्झित्वा समागताः स्वकीयमेव गृहम्।

# (६) न सः पुनरावर्तते

'तमेव विदित्वाऽतिमृत्युमेति' 'न सः पुनरावर्तते', प्रभृतिषु वदवाक्येषु भवतु नाम कोऽपि संकेतार्थः। तस्य नैवेह चर्चा। अत्र तु जीवनसर्वस्वभूतस्य यौवनमिति प्रसिद्धस्य युवभावस्याख्यानं क्रियते।

'रतिव्यायामसहनो मत्तेभस्येव मत्तताम्।
विधत्ते युवभावो यस्तद्यौवनमुदाहृतम्॥

इति यौवनस्य स्वरूपम्। रतिरेव व्यायामः, तत्सोढुं शीलमस्य, यद्वा रतिः सुरतं व्यायामश्च इति रतिव्यायामौ इत्युभयं सहते, यद्वा रतिः प्रेम मानसं, व्यायामः शरीरसौष्ठवसम्पादकः, एतेन युवभावस्य मनसि शरीरे च स्थितिरुक्ता। मत्तेभस्येव मत्तताम्, इति पदेन युवभावसम्पन्नस्य शरीरस्य समददन्तिशक्तित्वं, चिन्ताद्वेषशून्यत्वं, काले सूक्ष्मनिरीक्षणं, सत्यपि अतुले बले शुक्ररक्षणं, स्वप्रतिवेशिनः स्वकुटुम्बस्य च रक्षणम्, यूथपतित्वमुक्तम्। 'युवभाव' पदेन च चिरयौवनं, प्रेमविकारसंस्कृतं मानसं—इति यौवनपदस्य सरलं सूक्ष्मञ्च सुरूपम्।

वार्द्धक्यमागत्य न परावर्तते। यौवनञ्च गत्वा न परावर्तते। अयं हि युवभावः सर्वजीवप्रियः, विशेषतो मानवस्य, मानवेष्वपि राजरुचीनाम्। ययातेराख्यानं को न वेत्ति? चिराय स भोगान् भुक्त्वाऽपि तृष्णापाशपतितः पुरुं यौवनमयाचत। पुराणप्रसिद्धाः असंख्या भीमादयः प्रवीरा युवानः अद्य तु भारते केवलं पुस्तकविषया एव सञ्जाताः।

अद्य तु युवानोऽवस्थाविशेषेण मन्यन्ते। वस्तुतस्तु सगर्तेषु काननेष्विव सगर्तेषु काननेषु मृत्युपाशपतित इव पतति निर्जीवो युवभावः। लम्बकेशेषु शिथिलशरीरेषु, मुष्टिग्राह्यमध्येषु समतल-

वक्षःस्थलेषु अगूढजत्रुषु श्रीकृष्णऔषधालयस्य स्थायिग्राहकेषु, कृतगुप्तपत्रव्यवहारेषु, विविक्तसेविषु, कृतमनोरतिषु, हस्तवधूकेषु, कदशनकृतसर्वनाशेषु, अश्लीलसाहित्यसमीक्षकेषु, लम्बपाददण्डधृतचण्डातकानुजपतितलूनेषु, धृतातपसोपनेत्रेषु, अस्थिपञ्जरावशिष्टेषु, जीवत्सु इव प्रेतेषु, कृतधूम्रपानदुर्गन्धमुखेषु, सञ्चितदुराचारदुर्गुणेषु, स्वप्नदोषदुष्टेषु, युवतीदर्शनमात्रेणैवोद्विग्नोत्तेजितेषु, मिथ्याव्यवहारेषु भगिनीति सम्बोधने दुराचारं कुर्वत्सु, अनेकशः स्वीकृतरक्षाबन्धनाभिरेव साकं कृतोद्वाहेषु, प्रेमपथलुण्ठकेषु, निर्वीर्येषु एतेषु क्वास्ति यौवनम् ?

शरीरशिल्पे अद्यत्वे केचन शक्तिमन्तो युवकाः संलग्नाः। तेषामनुकरणं कियन्तः कुर्वन्ति ? केवलमङ्गुलिगणनागणनीया एव। सिंहास्तु अल्पसंख्यासु एव भवन्ति।

अद्य कृत्रिमसौन्दर्याकृष्टे नयने तु हतप्राये एव। तयोः अल्पेनैव कालेन स्थूलकाचमयानि उपनेत्राणि संलग्नानि। कर्णौ अहर्निशं चलचित्रसंगीतेन गुरूपदेशं प्रति तटस्थाविव, वाणी गालिदानपरायणा, करौ उत्कोचचतुरौ कोषापहारकौ सज्जनदण्डदायकौ, पादौ वृथाहिण्डनमण्डितौ सर्वदैव पादत्राणत्रस्तौ, मनो युवतिमात्रमग्नं, नासा कृत्रिमालेपनगन्धदग्धा, अधरस्ताम्बूलरागरञ्जितः, कृष्णवर्णो वा। नखाः नखरञ्जिनीरञ्जिताः, अर्द्धोद्घाटितं वक्षः, शुष्कतामागतौ ऊरूदण्डौ, क्षीरचिक्कणं मुखं पाण्डुरोगग्रस्तमिव—अयमति संक्षिप्तः परिचयो ऽद्यतनानां यूनाम्।

'विवाहात्पूर्वं', 'विवाहान्तरं पश्चातापो न स्यात्' 'पत्रव्यवहारः सर्वथा गुप्तो भविष्यति', लवपुरीयः, इन्द्रप्रस्थीयः, राजवैद्यः, भूतपूर्वराष्ट्रपतिवैद्यः, विद्युद्यन्त्रमयश्चिकित्सालयः—एवंविधाः लेखा भित्तिकासु, चतुष्कोणेषु, पत्रिकासु, समाचारपत्रेषु विज्ञापनेषु प्रायशोऽवलोक्यन्ते। एषां फलं स्पष्टमस्ति। युवानः चोरबुद्ध्या कार्यं कुर्वन्ति। पतन्ति च।

अन्यच्च। एकतः सर्वकारयन्त्रभूता शिक्षाधिपतयः कथयन्ति यौन (सैक्स) शिक्षा छात्रेभ्यो देया। एते वराकाः प्रत्यहं सैक्स-शिक्षां ददति, युवा च कामान्धः सन् पदे पदे पतति। एकतः सैक्स-शिक्षाया उद्घोषः, अपरतः गुप्ताङ्गानां परिचयेऽपि संशोधनेऽपि, मूत्रपुरीषापानसम्भोगमासिकधर्मशुक्राणां नामग्रहणेऽपि लज्जा, एकतः सुराव्यसनस्य निन्दा अपरतोऽनुदिन नवीना मधुशालाः। वराको युवा अकालकालकवलितः। आत्मरतिरेव स हतः।

एषु दिवसेषु बलात्कार-परस्त्रीव्यसन-हत्याप्रेमकथादिषु सर्वेषा-मेव दृष्टिः पतति। किं कारणमस्ति इति कोऽपि न विचारयति। 'वीरभोग्याः स्त्रियः श्रियश्च' इति निश्चितमतम्। यदा सर्वाङ्ग-सुन्दरी युवतिः पतितपतिमहोदयं बृहन्नलानुजं पश्यति, तदा सा किं कुर्यात्? भगवान् कामस्तस्याः साहाय्यं करोति। यदि सा गच्छति केनचित् प्रियेण साकं, तस्याः को दोषः। अद्यापि विवाहा भवन्ति, क्वास्ति पुरुषपरीक्षा, नारी-परीक्षा वा? "परस्परं समीक्षेथाम्" इति वाक्यस्याभिप्रायं को वा वदति पुरोहितः, वाक्कीलोऽन्यो वा योजकः। किं भवति? अद्य विवाहः, श्वः परित्यागः। विषभक्षणं पलायनं, गलबन्धनं, मृत्तैलपातपुरःस्सरं दाहकर्म इत्येव भवति। एतच्च तत्रैव भवति यत्र यौवनस्यान्त्येष्टिर्जाता।

कथयन्ति प्रायशो नेतारः—"एषामुपरि देशस्य भारः" अहं कथयामि—एते देशस्य भारभूताः। प्रथमे वाक्ये वृथामनस्तोषो दीयते, द्वितीये च कटुसत्यम्। सहशिक्षायामद्य बालिकाः अग्रे गच्छन्ति, बालकाश्च पश्चाद्भवन्ति। ते नेत्रनिर्वाणप्रियाः पठन्ति किमु? अस्तु। प्रकृतमेवानुसरामः। युवभावस्य महत्त्वं शिक्षायां कोऽपि न प्रतिपादयति। यदि देशस्य रक्षा आवश्यकी तदा यौवन-स्यापि रक्षा नितरामावश्यकी। 'मरणं बिन्दुपातेन जीवनं बिन्दु-रक्षणात्। शुक्रायत्तं बलं पुंसाम्' आदि वाक्यानि वृथाजल्पितानि न

सन्ति। ये चाधुनिका दक्षतरा 'एलोपैथी'-प्रवीणाः कथयन्ति— 'वीर्यनाशे न कापि हानिः' तेषां कथनं तु साहसमात्रमेव।

पशुपक्षिणोऽद्यापि पूर्ववदेव शक्तिमन्तः, वयञ्च पुरुषा पौरुष-हीना भवामः, प्रतिदिनं शक्तिः क्षीयतेऽस्माकम्।' सन्देहोऽस्माकं गुरुरद्य। अत एव भीमादयः कल्पनाकल्पिता एव जाताः।

अनर्थकारकेषु तत्त्वेषु 'यौवनं' गणयता नीतिविदा अद्य केवलं धनसम्पत्तिः प्रभुत्त्वमविवेकिताः इत्येव वाच्यम्। 'युवानोऽपि न चञ्चलाः' अद्य सत्यं प्रतिभाति कथनमिदं, तेषां दूषिकाप्लुतं नयनं निरीक्ष्य क्षीणकलेवरञ्च दृष्ट्वा। अद्य युवा चायपानं कृत्वा विषकूटं (विस्कुट) भुक्त्वोदरावर्तमाविष्करोति। दुग्धपानात्तस्य रक्तातिसारः रेचनं वा भवति। भ्रमणात्तस्य पादपीडा, गुरुवाक्यादवमान., स्नानाज्जाड्यं, प्रातर्जागरणात् शिरोवेदना, आकाशमधः शयनात्प्रतिश्यायः, सरलमार्गे पतनेऽपि अस्थिभंगः, युवतीपादबन्धनीप्रहारान्नेतृत्वं, कारागृहवासात् कौलीन्यम्, आत्महत्यायाः शूरत्वम्। किं जातम्! किं भविष्यति! एते शलाकामल्लाः (सींकिया-पहलवान) कदा दत्तावधाना भविष्यन्ति! इत्येव विचारयामि। युवभाव। एषु स्थिरो भव। भो मित्र! एषां कल्याणं कुरु। सखे! प्राणरक्षणे तत्परो भव अमीषाम्। बन्धो! बन्धुत्वं वितर। त्वमेव एतेषां संरक्षकः। पीडितकर्णसंकेतेनैषां कुरु साहाय्यम्। मा काचिद्युवती एतानुपहसेत्। यथैते आत्महन्तारो मा भवेयुस्तथा त्वया प्रयतितव्यम्।



# (७) श्रीवेङ्कटेशमन्दिरम्

देवतात्मना रजतगिरिणा अलङ्कृतोत्तरभागस्य द्राविडनाऽपि आर्यसंस्कृतिसमुपासकेन, भक्तिभावभरितेन, भस्मत्रिपुण्ड्रमण्डित-ललाटेन मृगमदर्चिताङ्गेनेव कृष्णवर्णेन, कृष्णवर्णेनापि सुवर्णेन, दक्षिणभाषासुदक्षेण, दाक्षिणात्यजनेन प्रतिष्ठितदक्षिणस्य, विशालाभ्यां भीमभुजदण्डाभ्यामिव उभाभ्यामम्भोनिधिभ्यामनभि-भूतवैभवस्य, दिव्यप्रभाभास्वरस्य भारतस्य दक्षिणसमुद्रप्रक्षालित-चरणस्य दक्षिणभूमिः सदैव सुदक्षिणेव मनांसि आकर्षति बहूनाम् ।

आन्ध्र-कर्णाटक-केरल-तमिलनाडु प्रभृतयः प्रदेशाः यथैव विविध-व्यापारेषु विज्ञानेषु च प्रसिद्धास्तथैव भक्तिमार्गेष्वपि निरन्तरं अग्रेसराः । भक्तिर्द्रविडे उत्पन्ना कर्नाटके च वृद्धिं गता—इति प्रसिद्धिरस्ति । सम्पूर्ण एव दक्षिणभारते समायातेऽपि कलौ अहर्निशं भक्तिभावो जागर्ति । कन्याकुमारी-शुचीन्द्र-रामेश्वर-मीनाक्षी-जम्बुकेश्वर-कपिलेश्वर-गुणशील-पद्मनाभस्वामी-कोदण्डरामस्वामी-पद्मावती-चामुण्डा-शिव-विष्णु-हनूमत्प्रभृतिदेवतानां मन्दिराणि नितान्तमद्यापि दर्शनीयानि ज्ञेयानि गम्यानि सन्ति । वेङ्कटेश-मन्दिरन्तु सकलसंसारस्य सर्वोत्तमं हरिपादयुगलमिव सर्वदा लक्ष्म्या-लिङ्गितमस्ति ।

आन्ध्रेषु 'तिरुपति'तः गव्यूतिसप्तमितमध्वानं पर्वतीयं गत्वा 'तिरुमलै' पर्वते राजते भगवान् वेङ्कटेशः । अयं मार्गः केशसंवाह-कायःशलाका (Hair-pin) इव वक्रः, नागान्तकभीतिपतितशेषदर्शित प्रस्तारप्रकार इव, निरन्तरं स्वर्गसोपानसतीर्थ्य इव, जनमेजय-नागयज्ञयाज्ञिकाहूत-आस्तीकसंरक्षितः स्वर्गं जिगमिषुरिव तक्षकः, पुरन्दरकर इव वज्रमयः, धूम इवोर्ध्वगमनः, पर्वतारोहणजनित-श्रमापनोदाय मन्ये भक्तानां कृते निर्मितः सर्पाकारः, सांख्यागम इव

कपिलेश्वरप्रशस्तः, वदान्य इवानाथाश्रमकलितः, अनवरतविविध-यानगतागतैः चिक्कणः, वेङ्कटेशकृपाभाव इव भक्तार्तिहरः, विश्व-चित्रकारबृहद्गोमूत्रिकेव, सदागतिरिव सदागतिः, पिङ्गलाचार्य इव लघु-गुरुगणसेवितः, शेषनागगमनसम्पर्कादेव मन्ये तरङ्गितः, पुराणोऽपि सत्पुरुषप्रशस्तः, ऊर्ध्वगोऽपि नीचैःसुस्थितः, निरा-धारोऽपि सदाधारः, पादाहतोऽपि शिरसाऽभिवन्द्यः, खल इव दूरतः प्रणम्यः, शिव इव भस्मना भूषिताङ्गः, परमानन्द इव अवाङ्मनो-गोचरः, मनोऽभिलाष इव दूरङ्गमः, मुग्धबाल इव सरेणुः ।

२५०० 'फिट' मितं मार्गमतीत्य समायाति वेङ्कटेशमन्दिरम् । अतिविस्तृते प्राङ्गणे बसयानविरामस्थलम्, कोषागारः, प्राथमिक-चिकित्साकेन्द्रम्, विविधाश्च विपणिकाः सन्ति । किञ्चिदग्रे गत्वा मन्दिरस्य तोरणं दृश्यते । अन्तःप्रविष्टाः जनाः उभयतः पण्य-वीथिकां पश्यन्तः अग्रे चलन्ति । आसु वीथिकासु तत्कालोपयोगिन्यः सर्वाः सामग्र्यः सन्ति । सम्मुखमेव समापतति चिरप्रतीक्षितः श्रीवेङ्कटेशालयः । दूरतः एव अस्य स्वर्णस्थूलपत्रजटितौ भास्वरौ कपाटौ मन्ये भगवतो हृदयस्य विशालतां निर्मलतां शुद्धताञ्च कथयन्तौ अव-लोक्येते । उपरिष्टात् स्वर्णकलसानां सूर्यप्रभाप्रभावात् कापि अन्या एव शोभा । द्वारे केवलं द्वित्रा एव राजपुरुषाः परिच्छेद-रूपेणैव स्थिताः । अत्र चौर्यस्य कोषहरणस्य तु नाद्यावधि धटिता कापि दुर्घटना ।

श्रीवेङ्कटेशदर्शनार्थं दर्शकानां कृते निर्मितेषु आच्छादनमहितेषु दीर्घभवनाकारेषु वज्रकुट्टिममयप्राङ्गणेषु मञ्चावलीमण्डितेषु स्थानोल्लङ्घनरहितेषु तिष्ठन्ति, सुविधानुसारं उपविशन्ति, उत्तिष्ठन्ति चलन्ति च जमाः । दर्शनोत्सुकाः चतुःपञ्चसहस्रं जना सर्वदैव पंक्तौ भवन्ति । दर्शकरथ्या नितरां रमणीया । नास्यां कोऽपि अतीत्य कमपि गन्तुमिच्छति विहाय कञ्चित् चञ्चलं युवानम । स्थाने स्थाने जलस्य (पानार्थं, हस्तप्रक्षालनार्थं, मुखशुद्ध्यर्थं),

वज्रनिर्मितानां रक्तवर्णानामासनानां समुचितः प्रबन्धः स्तुत्यः। अत एव दर्शकेषु न कोऽपि तृषापीडितः, न च गमनायासखिन्न एव भवति। अवशा रोगिणो नायान्ति दर्शनार्थमिति कृत्वैव मन्ये नास्ति रथ्यामध्ये मूत्रपुरीषोत्सर्गस्थानमिति सर्वथा उचितमेव। दर्शकानां दक्षिणहस्तदिशि दृढलौहजालावरण विद्यते। अनेन एकतः सुरक्षा अपरतः भक्तानां बह्वी सुविधा। अस्मादेव जालात् केचन दातारः रूप्यकस्य पणकपरिवर्तनं कुर्वन्ति। बहिरेव अनेके गृहीतपणकस्वल्प-प्रसेवकाः भ्रमन्ति धूर्ताः। धूर्तत्वन्तु तेषां तदा सम्मुखमायाति यदा ते शतपणकानां स्थाने षष्टि-सप्तति-अशीति-पणकानि ददति। अन्तःस्थो जनः तदा किं कर्तुं शक्नोति विहाय गालिदानम्। अस्तु, ईश्वरः सर्वेषामेव पालकः। वामहस्ते तु भवनभित्तिका। सर्वे 'गोविन्द-गोविन्द, बालाजी' इति नामसङ्कीर्तनं कुर्वन्तः, यथामति वेङ्कटेशस्तुतिं स्मरन्तः, प्रयातेऽपि प्रभाते 'वेङ्कटेशसुप्रभातं' पठन्तः भक्तिभावभरिताः मन्दं मन्दं चलन्ति। एषु केचन तत्कालकृत-गोदानाः केचन प्रत्यग्रस्नानार्द्रगृहीतवाससः, काश्चन जरठाः श्रद्धाबद्धाञ्जलयः, काश्चनान्दाश्रुपरिपूर्णमुखमण्डलाः, आबालवृद्धाः भवन्ति। न्यूनातिन्यूनं घण्टात्रयमस्मिन् दर्शनकार्ये लगति। विशिष्टं दर्शनं शताधिकरूप्यकैर्भवति। घण्टार्द्धसमय एवात्र विशेषः। एवं-विधस्य विशिष्टदर्शनस्य अन्यैव व्यवस्था। उत्सवेषु दर्शकानां लक्षत्रयमपि भवति, इति श्रूयते।

मुख्यमन्दिरभवनभित्तिकासु विविधाः कथाः चित्रिताः। क्वचिन्नारदः कश्यपादीन् यज्ञफलभोक्तारं पृच्छति, क्वचिद् भृगुः ब्रह्म-विष्णु-महेशालयं गत्वा तेषां परीक्षां करोति, क्वचित् पतिरोष-दग्धेव लक्ष्मीः वैकुण्ठं त्यक्त्वा गच्छति, क्वचिद् वराहवतारे श्रीमन्नारायणो धरणीमुद्धरते, क्वचिद् लक्ष्मीविरहसन्तप्तो नारायणः वेङ्कटाचले वल्मीकवासं स्वीकरोति, क्वचित् ब्रह्मणः परमेश्वरस्य

च गो-वत्सरूपधारणम्, क्वचित् सूर्यप्रेरिता गोपीवेशे लक्ष्मीः, वल्मीकस्थितस्य श्रीमन्नारायणस्य गोदुग्धपानम्, गोपमरणम्, वेङ्कटपतिविवाहः इत्यादि सर्वं चित्रेषु चित्रिम्। एतानि चित्राणि दृष्ट्वैव मन्ये दर्शकः परिश्रान्तो न भवति।

मन्दिरे अहर्निशं शुद्धघृतपरिपूर्णाः स्वर्णदीपाः प्रज्वलन्ति। उपरिष्टात् विद्युत्प्रभावात् संयन्त्रितः सुनियन्त्रितश्च शीतलः प्रवहति वायुः। कर्पूरसम्पर्कतः सुखदं वातावरणम् हृदयं प्राणांश्च प्रीणाति। एकस्मिन् सुदीर्घे प्रकोष्ठे सुवर्णनिर्मिताः शिविकाः आसन्दिकाः हंसाः मयूराः बहुविधानि सिंहासनानि च सन्ति। एतेषामुपयोगः उत्सवेषु यात्रासु च भवति, इति मन्ये। एते वयं शनैश्शनैः समायाताः श्रीवेङ्कटेशप्रतिमाप्राङ्गणे। साम्प्रतमस्माकं वामतो दृढरज्जुना विहितः सीमा मार्गस्य। दक्षिणतश्च मन्दिरस्य सुचिक्कणा भित्तिः। सम्मुखे भगवान् वेङ्कटाचलपतिः।

भगवान् वेङ्कटेश्वरः विष्णोरेव रूपान्तरम्। शेषाद्रिशेखरविभुः, वेङ्कटाचलपतिः, गोविन्दः, गरुडध्वजः इति वा तस्यैव भगवतो हरेर्नामान्तरम्। अस्य पाषाणी प्रतिमा कस्तूरिकाकलितेव, भक्त-पापहरणादेव मन्ये कृष्णतां दधाति। अत्युच्चशेखरमण्डिता इयं मूर्तिः अनेकस्वर्ण-रत्नाभरणैश्च आपादमस्तकं विभूषिता भक्तहृदया-ह्लादकारिणी, नयनानन्ददायिनी, मनोवाञ्छितार्थप्रदायिनीति को न वेत्ति? महार्हरत्नानां राशिः चेतः प्रसादयति, अक्षिणी चाश्चर्य-विस्फारिते करोति। वेङ्कटेशस्य पादयोः दिव्यरत्नप्रभा, मस्तके हरिचन्दनस्य प्रलेपः, नयने श्रीखण्डलेपाच्छादनाच्छन्ने इव, सस्मितौ अधरौ बन्धूकबन्धू—इति सर्वं यत्सत्यं दर्शनमात्रफलमेव, न तु वाचा वाच्यम्। धन्यास्ते मूर्तिकलाकोविदाः यैः अस्यां स्वजीवनस्य कश्चित्कालः सफलीकृतः। 'न तत्र चक्षुर्गच्छति न वाक् गच्छति' प्रभृति श्रुतिवाक्यानां संगतिः अत्र आगत्य भवति। मन्दिरे दर्शन-समये सर्वदैव वेङ्कटेशस्तुतीनां घोषः श्रूयते। जलयन्त्रलग्नाः घटा

इव जनाः निरन्तरं चलन्ति, परं भक्तिसुधाजलेन परिपूर्णहृदयाः एव दृश्यन्ते न तु रिक्ताः, इति विशेषः। सङ्कीर्णोऽप्ययं मार्गः असङ्कीर्ण एव मन्यते श्रद्धावनतैः। भगवतोऽनुकम्पया मया रिक्ते त्रिकोणाकारे स्थाने दर्शकपंक्तितः बहिरागत्य कानिचित् क्षणानि स्तोत्रपाठेन व्यतीतानि, इति अस्मद्बन्धूनां अन्येषाञ्च कृते आश्चर्यास्पदं बभूव। तत्रत्यः पूजकः यस्य कस्यापि दर्शकस्य शिरसि राजतशिरस्त्राणं धृत्वा आशीर्वादान् वितरति। सर्वशुद्धायाः सितायाः खण्डान् प्रसादरूपेण ददाति। मया इत्युभयमासादितम्। दर्शनं कृत्वा आत्मानं धन्यं मन्यमानः मुहुर्मुहुः दर्शनार्थं वलितग्रीवो दर्शकलोकस्तेनैव पूर्वोक्तेन क्रमेण बहिरायाति।

प्राङ्गणे अयमस्ति एकः गरुडस्तम्भाख्यः सुवर्णस्तम्भः, अयं मैनाक इव अज्ञातवज्रभेदः, स्वर्णदीस्वर्णपद्मनाल इव, वेङ्कटेश-गुणगणलेखप्रवृत्तस्वयम्भूकविकरकलम इव भूपत्रलग्नः, उच्चतया स्वर्गसोपानस्तम्भ इव, गगनकर्णवार्ताहर इव नास्तिकमानभङ्ग-कारित्वान्नूतन एव मानस्तम्भः, मलय इवान्तश्चन्दनशीतलः वेङ्कटेश्वरद्वाररक्षक इव, श्रीविलास इव सुवर्णमण्डितः, सकलदुरि-तानां कृते निर्मितोऽद्भुतः शूलदण्डः, ब्रह्मदण्ड इव तपोमन्त्रपूतः कलौ अवस्थितधर्मस्य एकश्चरणः सद्धर्मक्रियाप्रेरक इव, वेङ्कटाचल-पतिदिव्यबृहत्स्वर्णयूप इव, अनवरतनिपतितमन्दिरस्वर्णरेणुभिरेव मन्ये स्वर्णमयः, रस इव नानुमेयः, ऐन्द्रजालिक इवाद्भुतदर्शनः, सवितृमण्डलमध्यवर्तीव नारायणो हिरण्मयवपुः, कनकगिरिकिङ्कर इव, सूर्यप्रभाभास्वरोऽपि नयनहरः, योगीव सर्वावस्थासु एकासन-संस्थितः, संसारसागरसन्तरणपोतानामज्ञानान्धकारभ्रष्टमार्गाणां कृते दिव्यप्रकाशस्तम्भ इव, विराजते। मन्ये अनेनैव सुवर्णमन्थानदण्डेन मथिता रत्नगर्भा भगवदर्चायै अन्तःस्थितानि रत्नानि अनवरतं ददाति।

मन्दिरस्य पृष्ठभागे 'वेदपारायणमण्डपे' श्वेतवस्त्राः, गोक्षुरसमशिखाजालशोभितशिरसः पद्मासनस्थाः अपि कुशासनस्थाः दाक्षिणात्याः भस्मत्रिपुण्ड्रमण्डितललाटाः ब्राह्मणाः सस्वरं वेदं पठन्ति। 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति स्मारं स्मारं मन्ये ते श्रोत्रियाः स्वरेषु सर्वदा सावधानाः सन्ति। किञ्चिद्दूरे भगवतो मोदकमयः प्रसादो मूल्येन मिलति। अस्य मोदकस्य परिमाणः उदरपूर्त्यर्थं सर्वथा समर्थः। अयमपि प्रसादः श्रेणीबद्धैर्जनैः क्रीयते। एकस्मिन् प्रकोष्ठाकारे स्थाने प्रायशो विंशतिजनाः भक्तैः भगवते अर्पितानि रूप्यकाणि पणकानि च चिन्वन्ति, बृहत्तितउना पुनन्ति, कराङ्गुलीभिर्गणयन्ति। श्रूयते यदस्य मन्दिरस्य प्रतिदिनं सपादैकलक्षरूप्यकाणां भक्तार्पितेन द्रव्येण आयो भवति। मन्दिरस्य प्राङ्गणे एव बह्व्यः विपणिकाः सन्ति यासु नालिकेराणामति महान् राशिः सुस्थितः। प्रसादे नालिकेरफलं भक्तैः अर्प्यते पूजकैश्च एकस्मिन् लौहमुशलाकारे लघुस्तम्भे आघातेन द्विधा कृत्वा भक्तेभ्यो दीयते। अत्रैव केचन कृत्रिमकर्पूरविक्रेतारः तिष्ठन्ति। एकः सरोवरः 'कल्याणकट्टा' नाम्ना प्रसिद्धः। अत्र बह्व्यः स्त्रियः वृद्धाः युवत्यः सधवाः स्व शिरोवेणीं भगवते समर्प्य मुण्डितजटाः सन्तुष्टा भवन्ति। केशमुण्डनस्य अस्मिन् स्थाने अनेकधा माहात्म्यं प्रख्यातम्। श्रूयते यत् विदेशेषु वेणीनां निर्यातेन प्रतिमासं सार्द्धैकलक्षरूप्यकाणामायो मन्दिरस्य भवति। एताश्च विशुद्धा वेण्यः प्रचलितकृत्रिमकेशजालं तिरस्कुर्वन्ति। मन्दिरप्राङ्गणे पद्मावतीदेव्याः अपि सुप्रसिद्धं मन्दिरम्। अन्यान्यपि मन्दिराणि दर्शनीयानि सन्ति।

मन्दिराद् बहिः पण्यवीथिकायां भोजनस्य समुचिता व्यवस्था। भोजने च स्थूलास्तण्डुलाः, काचिद् द्विदला, अर्द्धः पर्पटः, रसमिति नाम्ना दधिजलम्, (पलाण्डुः सत्यामावश्यकतायां) सर्वमपीदं स्वल्पेनैव मूल्येन मिलति। भोजनमिदं 'प्रसादम्' इति कथयन्ति भोजन-

विक्रेतारः। भुक्त्वा तस्मादेवापणात् यथारुचि यथाकञ्चुककोषञ्च वस्तुजातं गृहीत्वा पुनः बसयानेन परावर्तन्ते जनाः।

श्रीवेङ्कटेशमन्दिरम् स्वर्णसम्पद्भिः सुमेरोः खण्डमिव प्रतिभाति। अस्या सुवर्णघण्टाः, स्वर्णपात्राणि, कनककपाटाः, हेमशिखराणि, गोपुराणि, आसनानि, रत्नानि च अस्य धनधान्यसमृद्धि कथयन्ति। सुविस्तृतं क्षेत्रम् औषधालयः, अनाथालयः, विश्वविद्यालयः, बससेवा, अनुशासनं, सर्वविधसुप्रबन्धः, विंशतिघण्टां यावत् वेङ्कटेशदर्शन-व्यवस्था, सात्त्विकं राजसञ्च वातावरणं मनसि कमपि अद्भुतमेव प्रभावं जहाति।

लोकप्रवादेषु अत्रत्यानां दिवंगतानां कामपरायणानां कुमारिकासमुपासकानां सम्भोगभुजङ्गानां धनवतां, कदाचित् मन्दिर-सम्पत्-स्वामिनां 'महन्त' नाम्नां बह्व्यः कामकथाः प्रचलिताः। साम्प्रतमपि बह्वी अचला सम्पत्तिः कुमारीणां नामनि लिखिता, एतदेव पर्याप्तं प्रमाणं तेषां धर्मकञ्चुकाच्छन्नशरीराणामधमानां भोगिनाम्। अलमेभिश्चित्तविक्षोभकारकैः प्रवादैः। गंगायाः एवं दर्शनं क्रियते, तस्यामेव स्नानं क्रियते, न तु तीर्थभूतानि पापानि अवलोक्यन्ते। इति कृत्वैव वेङ्कटेशस्तु मया सम्यक् दृष्टः, न पुनः तत्रत्याः पापाः, तत्रत्यानि वा पापानि। (२८.७.१९७८)

# (८) विवेकानन्दशिला

द्विसप्तत्युत्तरैकोनविंशतिशततमे ईशवीये सम्वत्सरे दक्षिणभारतं द्रष्टुकामा वयं केचन सुहृदो, विविधेषु प्रान्तेषु परिभ्रमन्तो रामेश्वरं

नमन्तः प्रस्थिताः कन्याकुमारीति नाम्ना सुप्रसिद्धं मनोरमं स्थानम्। स्थलमेतद् भारतवर्षस्य सुदूरे दक्षिणे निसर्गसौन्दर्यसम्पन्नमस्ति। मन्येऽत्रागत्य पुराकालिकं जलवासं संस्मृत्येयं मही न प्रवेष्टुं वाञ्छति सागरम्। मन्ये सम्मुखमागतं वीक्ष्य भयविह्वलेव सङ्कुचितेव तनुभावमङ्गीकुर्वन्तीव लक्ष्यते भारतमेदिनी। अस्य भूभागस्य सम्मुखे पतति सुप्रसिद्धा विवेकानन्दशिला समुद्रे नातिदूरम्। अत्रैव सागरत्रयसम्मेलनं दिव्यप्रयागयोगमिवाविष्करोति। वस्तुतः उपर्युक्ता-याश्शिलाया विवेकानन्दशिलेति नामार्वाचीननमेव विद्यते। श्रूयते यद् विवेकानन्दोऽस्मिन्नेव शिलाखण्डे तीर्त्वा समुद्रमेकाकी जगदम्बि-कायाः कुमारिकायाश्चरणन्यासं दर्शं दर्शं समाधिमास्थाय ब्रह्मज्ञान-मवाप। तन्नाम्नैवेयं शिला पश्चात् प्रसिद्धा जाता।

देशस्य विविधेभ्यः प्रान्तेभ्य एकत्रितानां कोटिद्वयमितानां रूप्यकाणामस्या निर्माणे व्ययो जातोऽद्यावधि इति श्रूयते। साम्प्रतं यावत्प्रथमचरण एव पूर्णो न तु सम्पूर्णमेव निर्माणम्। प्रातरेव भारतभूमिभागात् यन्त्रचलितानि जलयानानि निश्शुल्कं दर्शनोत्सुकान् दर्शकान् विविधरूपवेषाननेकभारतीभूषिताननान् सदागतीनिव सदा-गतीन् प्रापयन्ति गन्तव्यस्थलम्। राष्ट्रियस्वयंसेवकानां सहयोगो नितरामभिनन्दनीयो येनात्राहर्निशं सौन्दर्यमायाति। आयान्ति च सहस्रशो जना द्रष्टारः। स्वेच्छया प्रायस्सर्वैरेव दर्शकैरेकरूप्यकमितं द्रव्यपत्रं गृह्यते। एतदेव सञ्चितं धनं शिलानिर्माणहेतुभूतम्।

शिलायामेकतो विवेकानन्दमन्दिरमपरतश्च श्रीपादशिला-मन्दिरम्। विवेकानन्दमन्दिरे विवेकानन्दस्य नालिकास्त्रधातु (गन-मैटल) मयी कृष्णवर्णा प्रतिमा स्थापिताऽस्ति, तद्गुरोः श्रीमद्राम-कृष्णपरमहंसस्य गुरुपत्न्याः पूज्यायाः शारदामणेश्च चित्रे चित्रिते काचकपाटयुतयोर्नातिमहतोः प्रकोष्ठयोः। मन्ये दिव्यात्मानौ दम्पती सम्प्रत्यपि स्वकीयं प्रशान्तचित्तं जितेन्द्रियं प्रहीणदोषं यथोक्त-

कारिणं गुणान्वितमनुगतं मुमुक्षुं शिष्यं ब्रह्मज्ञाननेत्राभ्यां स्निग्धमवलोकयतः। मन्येऽसौ सौम्यमूर्तिर्विवेकानन्दः स्वगुरोर्गरीयसीं गिरं शुश्रूषुरिव सावधानः स्थितः सम्मुखमेव। अस्मिन् सात्त्विके मन्दिरप्राङ्गणे सहस्राधिकजनानामासनस्थानमस्ति। मन्दिराद् बहिर्विस्तृतं प्राङ्गणं विद्यते यत्र बहवो जनाः स्थातुं समर्थाः।

श्रीपादशिलामन्दिरे नामानुरूपं कुमारिकादेव्याश्चरणचिह्नमस्ति। श्रूयते यद्देवी कुमारी कन्या एकपादस्थितात्रैव सुचिरं तपस्तेपे। साक्षाच्चरणवतीयं शिला श्रीपादशिलामन्दिरयुताऽद्यापि देव्याः अखण्डं तपः स्मारयति। काचमञ्जूषासुरक्षितश्चरणो मन्ये भक्तार्तिनाशनपरो दीनदयापरः समायातेऽपि कलौ नाद्यापि स्थानं त्यजति धर्मरूपः। अयमेव चरणः शिरःस्थितोऽपि मूलाधारः शिलायाः, असंख्यजनागमनहेतुरनेकसहस्रनेत्रकृतदर्शनोऽक्षयवट इव लब्धविराट्पुरुषप्रसादो यज्ञमूर्तिरिव सुगन्धपरिपूरितः, पाषाणमयोऽपि न पाषाणहृदयः, पादोऽपि परिपूर्णः, सञ्चरणशून्योऽपि चरणः, सर्वोच्चस्थानीयोऽपि लब्धसकलजनहृदयासनः। मन्दिरे सात्त्विकतां विलोक्य मनो वाञ्छति तत्रैव स्थातुम्। मनसि समायाति "...न सः पुनरावर्तते"..."तमेव विदित्वाऽतिमृत्युमेति।" अद्यापि दिवङ्गतेऽपि विवेकानन्देऽमन्दं विवेकमानन्दञ्च वितरति देव्याश्चरणः।

इयं शिला प्रातरेवोदिते भगवति सहस्ररश्मौ श्रीवेङ्कटेशसुप्रभातप्रभावाद् भूयसी भक्तिभरितेव प्रतिभाति। मन्ये श्रीवेङ्कटेशदयिता क्षीरोदतनया सुप्रभातस्तुतिं श्रुत्वाऽहोरात्रं जागर्ति भक्तभयापहारिणी फेनपुञ्जदुग्धधवला। कर्णाटकसङ्गीतेन मन्दमृदङ्गध्वनिना चास्यां नितरां प्रीयते पर्यटकलोकः। सागरत्रयसम्पर्कशीतलोऽमन्दं प्रवहति पवमानः, येन तत्रत्यानां जनानां सवस्त्र इवान्तरात्मा हर्षचञ्चलो बुभूषुरिव प्रतीयते।

गतायां निशायां चलन्ति प्रवाताः सुगन्धानुयाताः। मनांस्येषु भूयो

रमन्ते नराणाम् । तथैवोदिते सूर्यदेवे समन्ताज्जनाः स्नानकृत्यं विधायार्चयन्ति स्तुतीनां सुघोषैः कुमारीम् । सुमन्त्रैः प्रबुद्धा विशुद्धैः सितैर्वस्त्रखण्डैः सिताभाः शिखाजालजीर्णाः कियन्तश्च यज्ञोपवीतैस्तथाऽनेकदेशप्रदेशस्मृतिज्ञानपूर्णाः समायान्ति द्रष्टुं नदीनां पतीनां त्रयाणामिहैकत्वमन्योन्यबन्धुत्वमित्थं शिलोच्चासनस्था असंख्यात देशप्रियाः सर्वशुद्धाः सुभक्ताः । न चात्र क्वचिल्लोभमोहौ न हिंसा । इहैवास्मदीयोऽभिलाषो मनोभावपुष्पाणि गुप्तानि कर्तुं समर्थो न जातः । न चास्माच्छिलाखण्डतो गन्तुकामो न कोऽपीति जाता मती रम्यभावा ।

शिलेयं ध्रुवं वारिमध्यप्रविष्टस्य जिष्णोर्गजस्य गण्डस्थलीमनुकरोति । मन्ये दक्षिणवायुप्रभावात् व्यक्तगौररूपेव लक्ष्मीरुदेति सागरतलात् यथा वा समुद्रमन्थनकर्मकृतश्रमो मन्दर एव साम्प्रतं विश्रान्ति भजते । नागाननेव विविधपत्रपुष्पभूषिता, समुद्रं लिलङ्घयिषोः हनूमतः साहाय्यसम्पादकमैनाकमूर्तिरिव, उद्वासतत्परा गैरिकवसनेव दिवसे प्रतिभाति । निशायां विद्युन्मालिकाभरणा, मणिगणमण्डितेव, सिन्धुमन्थनोद्गता कमलेव, तारागुणगुम्फिता गगनश्रीरिव, स्थूलमुक्ताफलकलिता ऐरावतकुम्भस्थलीव, दिव्यरत्नविराजिता महाकच्छपमूर्तिरिव, अनेकनक्षत्रमालालङ्कृतेव सिन्धुराजललाटपट्टिका शोभते सर्वदा । जलनिधितरङ्गाघातक्षुभिता दुग्धस्नातेव कस्य मनो न हरति शिला ?

दूरतः प्रातःकाले सति दिवाकरोदये वीचिविक्षोभक्षुब्धः सरस्वान् नितान्तमाकर्षतीव मनांसि । उडुपस्थिता धीवरा मत्स्यग्रहणपिशुना मकरध्वजतां यान्ति । क्षुब्धजलोत्थिता जलक्षोदपूर्णाः सवेगं चलन्त्यो लहरिकाः फूत्कारयुतान् दिव्यनागानपि तिरस्कुर्वन्ति । मन्ये समुद्रबालाः परस्परं मिलिता भूमिखण्डालिङ्गनार्थं वेगेन धावन्ति । विधातुराद्या सृष्टिर्धन्या यस्यामसंख्यातानि यादांसि वसन्ति । धन्या

चेयं दक्षिणभूः। धन्यमस्याः वैशिष्ट्यम्। धन्यमस्याः सौन्दर्यम्। धन्या प्रकृतिः। अत्रागत्य जहाति बुद्धिः कौटिल्यम्। अत्रत्येन सुदक्षिणेन विशुद्धवायुना वामतां याति स्वान्तम्। रससृष्टिं विलोक्य ब्रह्मास्वादमिवानुभवति मानससाधकाः। अत्रैव कदाचित् पूर्णिमायां व्यतीतायां प्रातः सूर्याचन्द्रमसोरुदयव्यसनदर्शनप्रभावितेन कविराजेन घण्टामाघेन मन्ये उक्तमासीत् :—

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बि घण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥

●

# (९) अहमपि भारतीयः ?

भारतमस्माकं देशः। 'सुजला सुफला मलयजशीतला शस्यश्यामला भारतभूः वस्तुतः अस्माकं माता'—नास्मिन् विषये सन्देहकणिकापि कापि। परं किमहं भारतीयः, इति समायाते प्रश्ने उत्तरार्थं वयमवलोकयामः गगनम्। किमस्माकं भारतीयत्वम्? केवलमेतदेव यज्जन्माऽस्मिन् देशे लब्धम्। पिता-पितामहाद्या ममात्रैव जन्म लेभिरे? बादरायणसम्बन्धादेवं किमु अस्माकं भारतीयत्वम्? नहि नहि। तदा? विलोकयामः आत्मीयां भारतीयताम्।

अहमस्मि सुरुचिसम्पन्नः सभ्यः नागरिकः राजपत्रितो वा कश्चित् कर्मकरः। आगम्यतामनुभूयतामद्य मम अतिथिसत्कारः। आस्यताम्, इयमासन्दी। अस्याः निर्माणार्थं मया नैकशः आंग्लपद्धतिः

अवलोकिता। एतदस्ति मदीयं गृहम्। अस्य 'काटेज-विला'त्वेन प्रसिद्धिः अस्ति। मन्ये भवन्तः भवनदिदृक्षावन्तः सन्ति। आगम्यताम् अवलोक्यताम्। अयं मम शयनकक्षः। अस्य द्वारि सुकोमलः पादप्रोञ्छकः, अन्तः पर्यङ्कयुगलं आधुनिकशयनसामग्री-सुसज्जितं, अर्द्धनग्नानि चित्राणि, शृङ्गारोपकरणभूषिता मञ्चिका, मन्दप्रकाशकारकः विद्युद्दीपः, कामोत्तेजका प्रतिसीरा, 'स्टीरियो रिकार्ड प्लेयर' प्रभृति सङ्गीतसाधनानि, गर्भनिरोधिका निःशुल्कं लब्धा सामग्री, अन्यानि अवाच्यानि वस्तूनि च सन्ति। संलग्नमेव स्नानगृहम्। स्नानगृहन्तु नामतः, वस्तुत एतदस्ति प्रसाधनगृहम्। अस्मिन् हस्तप्रक्षालनार्थं नीलवर्णचीनमृत्तिकाकुण्डिका, सुगन्धीनि अङ्गशोधकानि, प्रोञ्छनपटानि, क्षौरसाधनानि, केशहराणि लेपनानि, 'यूरोपियनशौचकुण्डः, पार्श्वतः शौचप्रवाहार्थं' 'सिस्टर्न' नामकं जलकुण्डम्, प्रोञ्छनार्थं रूक्षकागदपट्टिकाचक्रम्, गगनवर्ण-'टाइल' निर्मितं कुट्टिमं, धाराजलयन्त्रं, उडुपाकारः स्नानकुण्डः अण्डाकारं दर्पणम्, वायुशोधकं 'ओडोनील' प्रभृति—इति सर्वं यथास्थानं सन्निहितमस्ति।

अयमपरः विश्रामकक्षः। अस्मिन् अनेकविधानि सुखासनानि, आसन्दिकाः, भित्तिकासु विविधतैलचित्रितानि, अज्ञाततत्त्वानि द्वित्राणि चित्राणि, एकतः काचमञ्जूषायां बहूनि क्रीडकानि, बह्व्यः 'खजुराहो-मन्दिरभित्तिमूर्तिप्रतिकृतयः, अन्याः कामकलानन्द संवर्द्धिन्यः आकृतयः, एकं बहुचित्रसंवलितं वर्षतिथिपत्रं 'कलैण्डरा'ख्यम् यस्मिन् तिथीनां स्थितिस्तु सूक्ष्मेक्षिकयैव विलोकनीयापरं चित्रदर्शनं सर्वथा सुस्पष्टम्। एकस्मिन् कोणे 'दूरदर्शनम्' एकतश्च हिमीकरण-यन्त्रम्। अनेके दीपाधाराः विद्युद्दीपाः दण्डदीपाः, उपरिष्टात् कुटंकात् लम्बमाने व्यजने, मध्ये एकः काचमयः आरकूटनिर्मितः लम्बितः दीपधरः, गवाक्षेषु द्वारेषु च नूपुरमुखरिता प्रतिसीरा,

कुट्टिम आस्तीर्णमौर्णं कम्बलम्, केन्द्रे एका मञ्चिका, तत्रैव धूम्र-वर्तिकाभस्माधारः, समाचारपत्रम्, काश्चित् चलचित्रपत्रिकाः।

आधुनिकसामग्रीपरिपूरिता इयं मम पाकशाला। अत्र अकिट्टाललौहपात्राणि चीनमृण्मयानि च पात्राणि, कोणे पात्र-प्रक्षालनार्थं जलकुण्डिका पात्राधारः, भोजनपाकार्थमादर्श इंधनत्वेन प्रसिद्धम् 'इंडेन' नामकं (अस्य इंधनस्य अयमेव आदर्शः यत् न कदापि 'अग्नये स्वाहा'दिभिः कथमपि न वयं क्लिष्टाः भवामः)। अस्यां मम प्रेयसी पत्नी भोजनं पचति। अत्रैव प्रायः अहं स्थित्वा भोजनं करोमि। अतिथिषु समायातेषु भोजनकक्षे भोजनं भवति। अयं भोजनकक्षः महानसलग्नः एव। महानसात् परिवेषणमार्गात् भोजनमस्मिन् कक्षे आयाति। अत्र एका 'सनमाइका' चिक्कणपृष्ठा सुदीर्घा मञ्चिका। अस्यामेकं पुष्पपात्रम् चूर्णितलवणं कृष्ण-मरीचिका च पृथक्-पृथक् लघुपात्रे, चतसृषु दिक्षु आसन्दिकाः, तासु अपि लघुपटखण्डानि अङ्कालङ्करणानि हस्तमुखप्रोञ्छनानि च स्थापितानि। कुटलात् लम्बमानौ विद्युद्दीपौ, विद्युद्व्यजनं च। भोजने सर्वं चलति यथारुचि यथाकालं च।

मद्गेहे एकस्मिन् बाह्यप्रकोष्ठे अतिथिकक्षः अपि अस्ति। अत्र स्नानशौचयोः संयुक्ता व्यवस्था। शयनादिकस्य अपि सन्तोषप्रदः प्रबन्धः।

मदीये अध्ययनकक्षे भारतीयधर्मसंस्कृतिपुस्तकानां स्थानं नास्ति। नाहं जानामि रामं न वा कृष्णं नापि तयोः कथाम्। वेदाः उद्धृताः कदाचिद् विष्णुना—इति मया कदाचित् श्रुतम्। पुराणानि वस्तुतः पुराणानि नवयुगधर्मविरुद्धानि, स्मृतयो मन्वादिभिः नरैः रचिता अद्य व्यर्थाः सन्ति वर्णाश्रमपरम्परापूर्वाग्रहग्रस्ताः, तदा पठनीयं किमस्ति ? पठनीयम् एतदतिरिक्तं काव्याकाव्यजातं सत्य-कथा सरिता फैमिना, सुपर, मायापुरी, कामकथा—इति सर्वं मस्ति।

'द्रष्टव्यं' नग्नसौन्दर्यम् । अत एव उपर्युक्ते कक्षे मनोनीता मयाऽऽनीता सर्वा सामग्री ।

मदीया इयं प्रेयसी पत्नी गृहकर्मसु न तथा प्रवीणा यथा समूह-नृत्येषु स्वतन्त्रनृत्येषु वा दक्षा । 'क्लबेषु' इयमेकाकिनी अपि बहूनां हृदयानि हरति । आंग्लभाषायाः माध्यमेन यदा इयं वार्तालापं करोति तदा अस्याः अधरयोः कापि अन्या एव शोभा भवति । केशकर्तनार्थमियं प्रतिमासं नापितं पीडयति । कोऽस्या आयुषोऽनुमानं कर्तुं शक्नोति ? कृष्णवर्णरञ्जिताः केशाः, मुखे विलेपनं, वक्षसि कृत्रिमोत्सेधवर्द्धकं कूर्पासकम्, अधरयोः विकृतः रागः, मस्तके शाटिकावर्णानुसारं सौन्दर्यतिलकं न तु सौभाग्यतिलकं, कर्णयोः चक्राकारे कुण्डले, स्कन्धे प्रसेवकम्, दक्षिणमणिवन्धे कृत्रिमस्वर्ण-कङ्कणं, वामे च घटिका, कण्ठ एका तन्वी स्वर्णसूत्रनिर्मिता माला, बाहुमूलं स्तनसीमानं दर्शयेत् 'ब्लाउज', नाभिदर्शना शाटिका, हंसकशून्यौ पादौ वृथाहिण्डनाभ्यस्तौ, हस्ताङ्गुलीषु मुद्रिकाः । मातृत्वे तु नास्याः रुचिः । सहवासपरया अनया अनेकधा 'चैकअप' व्याजेन गर्भपातः कारितः । कथञ्चित् एकः पुत्रोऽस्ति यस्य पालनं धात्री करोति ।

अस्य पुत्रस्य प्रथमा वार्षिकी ग्रंथिः परश्वः एव तु मया सम्यक् सम्पादिता । किं कथयानि तस्य दिवसस्य शोभाम् ! तस्मिन् सुगन्ध-परिपूरिते पुष्पमालालालिते, विविधविद्युद्दीपाधारराजिते विश्राम-कक्षे उत्सवः आसीत् । मध्ये एकस्यां मञ्चिकायां राजतस्थाल्यां कुक्कुटाण्डनिर्मितं 'केकं' स्थापितम्, तेनैव साकमेकं खड्गाकारं लवित्रं, तस्य नातिदूरे स्थापिता एका क्षौद्रेयवर्तिका, एका च दीपशलाका । आहूतैः समागतैश्च प्राभृतीकृतानि अनेकवस्तूनि । समयेन प्रज्वालिता वर्तिका मुखमारुतेन चिरायुषा निर्वापिता । करताडनपुरःसरं सर्वैः समवेतस्वरेण घुष्टम्—"हैप्पी बर्थ डे टू

यू' यस्य आंग्लभाषावाक्यस्यार्थः अस्ति 'त्वज्जन्मदिवसार्थं वर्द्धापनम्' लवित्रखण्डितानि केकखण्डानि सर्वेभ्यः प्रसादरूपेण प्रदत्तानि। ततः जलपानं, तदनु नृत्यगीतादिकं, आर्केस्ट्राध्वनिः। ततः सभा-विसर्जनम्। अस्तु। अमस्यस्य पुत्रस्य 'डैडी, डैड, पापा' अस्मि, पत्नी च 'ममी, ममा'।

'पञ्चकृत्वोऽह्नो भोजनम्' मत्प्रियम् अस्ति। प्रातः चायपानं 'बैड टी' त्वेन कृत्वा, तदनु घण्टाद्वयेन प्रातराशं करोमि। मध्याह्न-भोजनं कृत्वा सायं चायं पिबामि, पुनः रात्रिभोजनं भवति। दुग्धपानात् तु मम विरेकः सञ्जायते। परं सुरा मत्प्रिया अस्ति।

अहमस्मि भारतीयः। मदीया वेषभूषा आपादमस्तकं वैदेशिक प्रभावग्रस्ता। चलचित्रेषु मदीयं चेतो रमते। परनारीषु धावति दृष्टिः। धर्मात् जुगुप्सते हृदयम्। प्रमाद्यति स्वभावः, विरमते सत्कार्यात्, स्निह्यति तस्करकर्मभ्यः, द्रुह्यति तीर्थेभ्यः, क्रुध्यति गुरुभ्यः। गुरुभिः किं कृतं मत्कृते येन तेषां श्राद्धं सम्पादयानि ? श्राद्धेषु न भवति कदापि श्रद्धा। उत्सवेषु मदीया सखी सुरा, व्यसनं मित्रं, भूतद्रोह : स्वभावः, परपीडा व्रतं, अश्लीलता सरलता, कौटिल्यं कौशलं, चौर्यं चरित्रं, गालिदानं महादानं, अतिथितिरस्कारः पुरस्कारः, नास्तिकता आस्तिकता, पुराणपुरुषनिन्दा सामर्थ्यम्, अष्टविधमैथुनं अष्टांगयोगः, अरिषड्वर्गः षड्गुणसम्पन्नः सुहृत्, कृतघ्नता सम्पन्नता, विदेशः आदर्शः, धनस्य द्वितीया गतिः मतिः। अत एव ब्रवीमि अहमपि भारतीयः ?

# (१०) पञ्च च मे

[ 'हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसी'दित्यनुसारं युगारम्भे अद्वितोयो हिरण्यगर्भ आसीत् । तेन स्वेच्छया रूपद्वयं कृतम्, तदनु 'एकोहं बहु स्याम' इति विचारयता तेन सृष्टिर्निमिताऽखिला । सत्यपि सृष्टिकौशले पञ्चानामिह किमप्यन्यदेव वैशिष्ट्यम् ।]

पञ्च ज्ञानेन्द्रियैः पञ्च कर्मेन्द्रियैः पञ्च वायुभिः सम्पन्नोऽयं मनुष्यः पञ्च भूतानां रम्यरूपमेवाविष्करोति जन्मना, पञ्चत्वं गतश्च परमात्मनि लीयते । किमिति अंगुलीनां करे-पादे वा पञ्चकमेव निर्मितं विधात्रा ? 'लालयेत् पञ्च वर्षाणि इत्येव नीतिक्रमः सुदृष्टः । परलोकसाफल्यार्थं 'पञ्चाग्नितपः' एव वैदिकानां शरणम् । स्वर्गे देववृक्षा अपि 'पञ्चैते देवतरवो मन्दारः पारिजातकः सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरवचनेन पञ्चैव सन्ति । पञ्चमुखस्य भगवतः शिवस्य 'पञ्चायतनमेव प्रसिद्धमस्ति । भोजनं पञ्चकवलेनैव प्रायः भारते क्रियते । अन्वाहार्य-गार्हपत्य-आहवनीय-सभ्य-आवसथ्य-भेदैः पञ्चविध एवाग्निः । मनुना श्राद्धस्य पञ्च एव भेदा अङ्गीकृताः ।

व्रतार्थं, तिथिपरिज्ञानार्थं वा पञ्चाङ्गमेव पश्यन्ति नक्षत्रविद्याकुशलाः । पूजावसरे पञ्चामृतं, श्रावणीपर्वणि पञ्चगव्यं, चिकित्सार्थं पञ्चकर्माणि, (वमन-विरेचन-नस्य-अनुवासन-निरूह—नाम्ना प्रसिद्धानि) कथं विस्मरणीयानि ? वेदान्ते कोषपञ्चकं, पञ्चीकरणञ्च पृथगेव दृश्यते । पञ्चावयवमेव वाक्यम् अनुमानप्रसङ्गे पठ्यते पाठ्यते च । 'प्रतिज्ञाहेतूदाहरणोपनयनिगमानि' पञ्चावयवास्तस्य सुप्रसिद्धाः । दर्शने चार्वाक - सिद्धान्ते 'पञ्चगुप्त'स्य महन्महत्त्वम् अस्ति । नारदस्य च 'पञ्चरात्रं कथं वा उपेक्षणीयम् ?

चितिः स्वतन्त्रा विश्वसिद्धिहेतुः 'पञ्च कृत्यानि करोति।

संस्कृतनाटके पञ्चादिकाः (दशपराः) एव अंकाः भवन्ति। प्रस्तावनाया अपि पञ्चैव भेदाः स्वीकृताः। किञ्च 'अर्थोपक्षेपका पञ्च विष्कम्भकप्रवेशकौ चूलिकांकावतारोऽथ स्यादंकमुखमित्य' प्युक्त्वा कविराजेन विश्वनाथेन पञ्चानामेव स्थितिरुक्ता। अवस्था पञ्च कार्यस्य, सन्धयः पञ्च अर्थप्रकृतयोऽपि पञ्चेव सन्ति। श्रव्य-काव्यप्रसङ्गे 'पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि' इत्यनुसारं पञ्च दोषाः, वाक्यगतो दोषः पञ्चधा, पदांशगतोऽपि तथैव, अनुप्रासालङ्कारः, धर्मलुप्तोपमा, अतिशयोक्तिः, अप्रस्तुतप्रशंसा चेत्यलङ्कारा अपि पञ्चविधा एव भवन्ति। महाकवेः श्रीहर्षस्य 'पञ्चनली कथं वा विस्मर्यते ?

भोजनस्य प्रसङ्गे उपस्थिते सति 'पञ्चकृत्वोऽह्नो भोजन'मिति कौमुदीस्थं वाक्यं भोजनकालं पञ्चिवधमेव निर्दिशति। मांसाशिनां कृते स्मृतिकारैः 'पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः' इत्युक्त्वा निर्णयो दत्तः। किञ्च 'पञ्च' कवलाभावे नास्ति भोजने स्वादः। पंचविधलवणाभावे क्व वा भोजनं पाचकं चूर्णं वा ? चिकित्साशास्त्रे 'पंचतिक्त'नाम्ना निम्बामृतावृषपटोलनिदिग्धिकानां बोधो भवति। तथैव 'पंचसकार' चूर्णेन उदरामयो याति। पंचरस-पंचलौह-पंचौसिद्धौषधि-पंचोपविष-निम्बपंचक-निम्बूकपंचक-पंचमूल-पंचमूत्र-पंचमूली-प्रभृतियोगा अपि आयुर्वेदे प्रसिद्धाः। सुश्रुतानुसारं धूमोऽपि पंचविध एव।

पंचलक्षणसमन्विते पुराणे समुद्रमन्थनावसरे भगवान् विष्णुः पंचाङ्गत्वेन (कच्छपशरीरेण) सुरासुरयोः साहाय्यमकृत। पंचयामो हि दिवसः शुभकार्यैः नेतव्य नोचेत्, 'पंचसूना' भयमायाति। यथा-शक्तिः ब्राह्मणैः पंच महायज्ञाः सम्यगनुष्ठेयाः। दैनिकदेवकर्मणि 'पंचनीराजनम्' सिद्धिदं भवति। पितृकर्मणि 'पंचपात्रमेव शोभते। देवालयेषु अष्टाङ्गप्रणामाभावे 'पंचाङ्गप्रणाम' एव कार्यः। प्राणिनां

पंचश्रेणयः (देव-मनुष्य-गन्धर्व-नाग-पितराः) श्रुतिसिद्धाः।

भारतस्य 'पंचवटी' रामायणे प्रसिद्धा एव, पंचनदप्रदेशोऽपि स्वकीयैः धनधान्यस्वास्थ्याचारैः पृथगेव दृश्यते। पञ्चबाणस्य भयं पंचमुखः शिवो हेलयैव अपाकरोति। भगवतः शिवस्य पंच-कर्माणि (सृष्टिस्थितिध्वंसविधानानुग्रहत्वेन) सर्वमान्यानि। "काशीखण्डे" 'ज्ञानवापी-नन्दिकेशः-तारकेशः-महाकालेश्वरः- दण्ड-पाणिः- इत्येषां संक्षिप्तं नाम 'पंचतीर्थी' एव स्वीकृतम्। तीर्थेषु च 'पंचबदरी' प्रसिद्धिमाप्नोति। तथैव "पंच प्रयागाः" एव सर्वप्रसिद्धाः। पंचपाण्डवा अन्तिमकाले हिमालयमेव गता पंचत्वमिति श्रूयते। संसारे पवित्रनदानामपि संख्या 'पंचैव' विद्यते। कदाचिद् ब्रह्मणोऽपि मुखानि पंच एव आसन् चतुर्मुखस्तु सः पश्चादेव जातः।

व्याकरणग्रन्थेषु 'यत्नो द्विधा, आभ्यन्तरो बाह्यश्च, आद्यः पंचधा' इत्युक्त्वा आभ्यन्तरस्य स्पृष्टादयो भेदाः दर्शिताः। 'कु-चु-टु-तु-पु एते उदितः' इति कथनात् वर्गाणामपि पंचैव रूपाणि पुरस्तादायान्ति। प्रत्येकस्मिन् वर्गे पंचैव वर्णा भवन्ति। 'शल्' प्रत्याहारे पंचैव वर्णाः समानीताः। 'रक्षोहागमलघ्वसन्देहाः प्रयोजन-मिति' महाभाष्यवचनात् शब्दानुशासनस्य पंचविधमेव प्रयोजनम्। समासः पंचधा, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पंचवृत्तयो भवन्ति।

पंचज्ञानापरनाम्नो बुद्धस्य पंचशीलानां तस्य समये तु प्रचार आसीदेव, साम्प्रतमपि भारतीयाः पंचशीलस्य सिद्धान्तं स्वीकुर्वन्ति। 'अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रह'भेदेन यमा अपि पंचधा, तथैव 'शौच-सन्तोष-तपः-स्वाध्याय-ईश्वरप्रणिधान'रूपा नियमा अपि पंचैव। भगवता पतंजलिना चित्तवृत्तयोऽपि पंचैव स्वीकृताः। किं च समाधिरपि पंचत्वमेव भजते, चित्तस्य अवस्था अपि योग-शास्त्रे पंच सन्ति, योगस्य पंचैव बहिरंगसाधनानि (यमनियमासन-प्राणायामप्रत्याहारभेदेन) स्वीक्रियन्ते। द्वेषोऽपि पंचधा, तथा च

नित्यनैमित्तिककाम्यनिषिद्धप्रायश्चित्तभेदेन कर्मापि पंचविधमेव योगशास्त्रेषु नियतम् ।

न्यायशास्त्रे हेत्वाभासाः पंचैव भवन्ति । 'एते पंचान्यथासिद्धाः' अद्यावधि तथैव सन्ति । ग्रन्थस्य 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्त-रम् । निर्णयश्चेति पंचाङ्गं शास्त्रेऽधिकरणं स्मृतमि'त्युक्तया पंचांगत्वं सिद्धमेव । छन्दःशास्त्रे तु पंचानाम् अन्यदेव वैशिष्ट्यम् । तथाहि पंचचामरं विना क्व वा दशग्रीवकृतं शिवताण्डवस्तोत्रम् ? वैदिके पंक्तिच्छन्दसि पंच चरणा भवन्ति । संस्कृतपंक्तिच्छन्दसि च प्रतिचरणं पंच वर्णा भवन्ति । किंच तूणकमालिनी-लीलाखेल-शशिकला-छन्दसां प्रतिचरणं पंच गणा आयान्ति ।

वेदे 'पंचोक्षण' शब्देन अग्नि-वायु-विद्युत्-मेघ-सूर्यप्रकाशानां पचानामेव ग्रहणं भवति । पंचपादं पितरं' 'पंचारे चक्रे' प्रभृतिषु मन्त्रेषु पंचानां पृथगेवास्तित्वं दृश्यते । वैदिकेषु ग्रन्थेषु 'पंच सम्भाराणामेव महत्त्वम् :—

"पूर्वोक्तानां मृत्ति कावराहविहतवल्मीकवपापूतीकाजकृष्णाजिन-लोमरूपाणां पंच संख्यां प्रशंसति'पंचैते सम्भारा भवन्ति" [ तैत्तिरीय आरण्यक-प्रपाठक ५/अनु० २ ]

आचार्य सायणः साम्नः पंच भागानेव स्वीकुर्वन्नाह "पंच भागयुक्तस्य साम्नश्चरमो भागो निधनं, मत् त्रिवारं पठेत् । तेन लोकत्रयाद्रक्षसामपहतिर्भवति ।" [तैत्ति० आरण्यके प्रपा०५]

बृहदारण्यके (६/२) प्रवाहणः श्वेतकेतुं पंच एव प्रश्नान् पृच्छति—'वेत्थ यथेमाः प्रजा प्रयत्यो विप्रतिपद्यन्ता ३, इति नेति होवाचः……" एतदेव वृत्तं छान्दोग्येऽपि (५/३) विद्यते ।

कौटिल्यानुसारं मातरोऽपि पंच, पितरोऽपि पंचैव सन्ति—

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पंचैते पितरः स्मृताः ॥

राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च ।
पत्नी माता स्वमाता च पंचैता मातरः स्मृताः ॥

[चाणक्यनीतिदर्पणे]

भारते पंचकन्याः, पंचपुरुषाः, पंचमुनयः—सर्वे समादरं लभन्ते । तथा हि श्लोकाः—

अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
पञ्चकन्या स्मरेन्नित्यं महापातकनाशनम् ॥
हरं हरिं हरिश्चन्द्रं हनुमन्तं हलायुधम् ।
पंचकं वै स्मरेन्नित्यं घोरसङ्कटनाशनम् ॥
उषा ह्युमा च वैदेही रमा गङ्गेति पंचकम् ।
प्रातरेव स्मरेन्नित्यं सौभाग्यं वर्द्धते सदा ॥
अगस्तिमधिवश्चैव मुचुकुन्दो महाबलः ।
कपिलो मुनिरास्तीकः पचैते सुखशायिनः ॥

[देवपूजापद्धतिः]

महाभारते (शान्तिपर्वणि) कालकवृक्षीय-उपाख्याने पंच विधानामेव मन्त्रिणामावश्यकः सद्भाव उक्तः । मित्राण्यपि सहार्थ-भजमानसहजकृत्रिमधर्मात्मा इति भेदेन पंच एवोक्तानि । दानस्य हेतवोऽपि (भारते अनुशासनपर्वणि) पंचैवोक्ताः ।

सत्स्वपि समुद्रमन्थनोत्थेषु चतुर्दशसु रत्नेषु पंचरत्नं कामपि उत्कृष्टां विच्छित्तिं दधाति । पंचरत्नमित्थं स्वीकृतं मनीषिभिः—

'नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् ।
प्रवालं चेति विज्ञेयं पंचरत्नं मनीषिभिः ॥
सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् ।
रत्नपंचकमाख्यातम्··· ··· ··· ··· ॥
कनकं हीरकं नीलं पद्मरागश्च मौक्तिकम् ।
पंचरत्नमिदं प्रोक्तं ऋषिभिः पूर्वदर्शिभिः ॥'

पंचदीर्घ पदेन शरीरस्य पंचाङ्गानि गृह्यन्ते तथाहि—

'बाहू नेत्रद्वयं कुक्षिर्द्वे तु नासे तथैव च।
स्तनयोरन्तरं चैव पंचदीर्घं प्रचक्षते॥"

रुद्राक्षस्य अनेकभेदेषु पंचमुखरुद्राक्षस्य महन्महत्त्वमस्ति। रुद्राक्षजाबालोपनिषदि उक्तमस्ति—

"पंचवक्त्रन्तु रुद्राक्षं पंचब्रह्मस्वरूपकम्।
पंचवक्त्रः स्वयं ब्रह्म पुंहत्यांच व्यपोहति॥"

गायन्त्रीमन्त्रस्य पंचप्रणवसंयुक्तस्य जाप उपदिष्टो विश्वामित्रेण

'धर्मशास्त्रपुराणेषु इतिहेसेषु सुव्रत।
पंचप्रणवसंयुक्तां जपेदित्यनुशासनम्॥'

(विश्वामित्रकल्पे)

इयंच छन्दसां माता गायत्री पंचवक्त्रा पंचपदी, पंचशीर्षादिभिः पदैः प्रसिद्धा। तथाहि—

'पंचवक्त्रां दशभुजां त्रिपंचनयनैर्युताम्।
मुक्ताविद्रुमसौवर्णां सितशुभ्रसमाननाम्॥'

(गायत्रीपंजरस्तोत्रे/४६)

प्रत्यङ्मुखी पंचपदी पंचाशत्तत्त्वरूपिणी।
पातु प्रतीचीमनिशं सामब्रह्मशिरोऽङ्किता॥

(गायत्रीपंजरस्तोत्रे/५५)

गायत्र्याः पञ्चशीर्षत्वं प्रतिपादयन्ती गायत्र्युपनिषदाह—"...कानि पञ्च शीर्षाणि ?।...व्याकरणमस्याः प्रथमं शीर्षं भवति, शिक्षा द्वितीयं, कल्पस्तृतीयं, निरुक्तं चतुर्थं, ज्योतिषामयनं पञ्चमम्।"

"गायत्र्याः पञ्चाङ्गानि एव प्रसिद्धानि—

'पटलं पद्धती वर्म तथा नामसहस्रकम्।
स्तोत्राणि चेति पञ्चाङ्गं देवतोपासने स्मृतम्॥'
कवचं देवतागात्रं पटलं देवताशिरः।
पद्धतिर्देवहस्तौ तु मुखं साहस्रकं स्मृतम्॥

स्तोत्राणि देवतापादौ पञ्चाङ्गं पञ्चभिः स्मृतम् ॥
(गायत्रीपद्धतिः/गायत्रीपञ्चाङ्गम्)

इयं भगवती पञ्चपदी, पञ्चवक्त्रा, पञ्चशीर्षा गायत्री पञ्चभिः वर्णैः सर्वदोद्भासिता पूज्यते भक्तैः । तथा चोक्तम्—

'रक्तश्वेतहिरण्यनीलधवलैर्युक्तां त्रिनेत्रोज्ज्वलाम् ।
रक्तां रक्तनवस्रजं मणिगणैर्युक्तां कुमारीमिमाम् ॥
गायत्रीं कमलासनां करतलव्यानद्धकुण्डाम्बुजाम् ।
पद्माक्षीं च वरस्रजं च दधतीं हंसाधिरूढां भजे ॥''
(गायत्रीसहस्रनामावली/६)

पञ्चपूजोपचारान् प्रशंसति भार्गवः—

'ध्यानमावाहनं चैव भक्त्या यच्च निवेदनम् ।
नीराजनं प्रणामश्च पञ्चपूजोपचारकाः ।'
(परशुरामकल्पसूत्रम्)

क्वचित् 'गन्धं पुष्पं च धूपं नैवेद्यमेवं पञ्चोपचारेषु गणयन्ति बुधाः । पञ्चाङ्गान्यपि अन्यानि स्वीकृतानि—

'पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम् ।
अभिषेकश्च विप्राणामाराधनमपीश्वरि ॥''

नीतिशास्त्रसम्बद्धानि पञ्चाङ्गानीमानि—

'सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥'' (कामन्दकः)

पूजाकर्मणि नित्यनैमित्तिकादिषु कर्मसु च प्रसिद्धमाचमनमपि पञ्चविधमेव निश्चितमस्ति :—

'आचमनविधिः प्रोक्तः पौराणः स्मार्त आगमः ।
श्रौतं मानसमाचम्य पञ्चभिः श्रुतिचोदितैः ।''
(गायत्रीकल्पः/परिच्छेदः २/४-५)

प्राणायामे पञ्चभिरेवाङ्गुलीभिर्वायुरोधनं, पञ्चपूजा इत्युभयमवश्यकरणीयं भवति । तथाहि—

'नासापुटं त्वङ्गुलीभिः पञ्चभिर्वायुरोधनम् ।
शनैः शनैस्तु निःशब्दं प्राणायामं निरोधयेत् ।।
(गायत्रोकल्पः/परि० ३/१५)

पंचपूजां विना येन प्राणायामं करोति यः ।
तस्य निष्फलितं कर्म विश्वामित्रेण भाषितम् ।।
लकारञ्च हकारञ्च यकारञ्च रकारयोः ।
चकारमिति विख्यातं पञ्चपूजातमकं जपेत् ।।
(गायत्रीकल्पः/परि० ३/१९-२०)

भगवान् पशुपतिः पञ्चाक्षरमन्त्रेण नितरां तुष्यति । लिङ्गपुराणे (पूर्वार्द्धे) पंचाशीतितमोऽध्यायः 'पंचाक्षर-माहात्म्यवर्णनम्'—इति शीर्षकनिबद्ध एव । उत्तरार्द्धे 'चतुर्दशाध्याये' पंचब्रह्मकथनवर्णनात्मके भगवतः शिवस्य पंचमूर्तयः प्रोक्ताः । तथैव पंचपंचाशततमे योगस्य पंचविधत्वं प्रतिपादयन् भगवान् शिव अवोचत्—

'प्रथमो यन्त्रयोगश्च स्पर्शयोगो द्वितीयकः ।
भावयोगस्तृतीयः स्यादभावश्च चतुर्थकः ।
सर्वोत्तमो महायोगः पंचमः परिकीर्तितः ।। (लिङ्गपुराणे)

श्वेताश्वरोपनिषदि संसारसिन्धोः मनोहरं रूपकं निबद्धं ब्रह्मविद्भिर्मनीषिभिः पंचालम्बनेनैव—

'पंचस्रोतोऽम्बुं पंचयोन्युग्रवक्रां
पंचप्राणोर्मि पंचबुद्ध्यादिमूलाम् ।
पंचावर्तां पंचदुःखौघवेगां
पंचाशद् भेदां पंचपर्वामधीमः ।।(श्वेताश्वर/१/५)

एतत् 'पंचानां महत्त्वं न केवलं भारते, अपितु बहिरपि, बहुषु सम्प्रदायेषु अस्त्येव । यवनानां 'नमाजाख्या ईशस्तुतिरद्यापि पंचवारमेव भवति । जैनानां 'पंचणमोकारमन्त्रः' एव नितरां सम्मानितः बौद्धानां 'पंचशीलानि' स्कन्धपंचकम् कौलानां 'पंचमकार'सिद्धिः,

सिक्खानां 'पंचकक्का'त्वेन प्रसिद्धानि चिह्नानि, सर्वमपीदं पंचप्रेरित-मेव ।

साहित्ये च पंचानामनेकधा महत्त्वं दृश्यते । केचन श्लोकाः सङ्ग्रहणीया दीयन्ते—

१. गूढमैथुनधार्ष्ट्ये च काले चालयसङ्ग्रहम् ।
अप्रमादमनालस्यं पंच शिक्षेच्च वायसात् ॥

२. आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पंचैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥

३. अतिथिर्बालकः पत्नी जननी जनकस्तथा ।
पंचैते गृहिणः पोष्या इतरे च स्वशक्तितः ॥

४. पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।
भावबोद्धा रणे योद्धा प्रभुः पंचगुणो भवेत् ॥

५. इन्द्रात्प्रभुत्वं ज्वलनात् प्रतापं यमात् वैश्रवणाच्च वित्तम् ।
पराक्रमं रामजनार्दनाभ्याम् आदाय राज्ञः क्रियते शरीरम् ॥

६. बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकंचुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥

पंच त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥

पंचैव पूजयन् लोके यशः आप्नोति केवलम् ।
देवान् पितॄन् मनुष्यांश्च भिक्षूनतिथिपंचमान् ॥



९. हारः प्रलम्बितपयोधरमध्यवर्ती,
शुष्कस्तनान्तरगतो वरकंचुकश्च ।
काणेक्षणांजनममूर्ध्नि च पुष्पमाला,
दीनाश्रयो बुधजनः खलु पंच दुःखम् ॥

१०. पंचभिः सह गन्तव्यं स्थातव्यं पंचभिः सह ।
पंचभिः सह वक्तव्यं न दुखं पंचभिः सह ॥

मन्ये अत एव भगवती श्रुतिः पूर्वमिह आह—'पंचजना अदितिः' 'पंच च मे' साभिप्रायम् । अलमेषां पंचानां प्रपंचेन साम्प्रतम् ।

# देववाणी-परिषदा प्रकाशिताः ग्रन्थाः

| | | |
|---|---|---|
| १. | अर्वाचीनसंस्कृतमहाकाव्यविमर्शः (प्रथमखण्डः)<br>(सं० : डा० रमाकान्तशुक्लः) | रु० १५.०० |
| २. | ,, ,, ,, (द्वितीयखण्डः) | रु० ३०.०० |
| ३. | ,, ,, ,, (तृतीयखण्डः) | रु० ३०.०० |
| ४. | कर्णभूषणम् (डा० सी० आर० स्वामिनाथन्) | रु० ५.०० |
| ५. | भाति मे भारतम् (डा० रमाकान्तशुक्लः) | रु० ४०.०० |
| ६. | श्रीकृष्णचरितम् (डा० रमेशचन्द्रशुक्लः) | रु० ३०.०० |
| ७. | सुगमरामायणम् ,, ,, | रु० ३५.०० |
| ८. | हरविजयस्य साहित्यिकम ्यनम्<br>(डा० कृष्णकान्तशुक्लः) | रु० ६०-०० |
| ९. | श्रीमदप्पयदीक्षितचरितम्<br>(डा० हरिनारायणदीक्षितः) | रु० २०.०० |
| १०. | भारतस्वातन्त्र्यसंग्रामेतिहासः (डा० रमेशचन्द्र शुक्लः) | रु० ३५.०० |
| ११. | सदाशयसमुच्चयः (पं०टी०वी० परमेश्वर अय्यरः) | रु० १५.०० |
| १२. | आभाणकमञ्जरी ( ,, ,, ) | रु० १५.०० |
| १३. | मेघदूत : एक विश्लेषण (डा० देवीदत्त शर्मा) | रु० २०.०० |
| १४. | रघुवंश : एक विश्लेषण ( ,, ,, ) | रु० २०.०० |
| १५. | अभिज्ञानशाकुन्तल : एक विश्लेषण ( ,, ) | रु० २०.०० |
| १६. | कालिदास की कला और संस्कृति (भाग २)<br>(लेखक : डा० देवीदत्त शर्मा) | रु० ६०.०० |
| १७. | जय भारतभूमे ! (डा० रमाकान्तशुक्लः) | रु० ३०.०० |
| १८. | अर्वाचीनसंस्कृतसाहित्यपरिचयः (प्रथम खण्डः)<br>(सं० : डा० रमाकान्त शुक्लः) | रु० ३०.०० |
| १९. | राधाकृष्णरसायनम् (श्री ओट्टूर उण्णि नम्बूदिरीपादः) | रु० ४०.० |
| २०. | साधारणीकरण और समानान्तर चिन्तन की पूर्वपीठिका<br>(डा० सुलेखचन्द्र शर्मा) | रु० ५०.०० |
| २१. | अभिनवहनुमन्नाटकम् (डा० रमेशचन्द्र शुक्लः) | रु० २०.०० |
| २२. | भट्टनायक और अभिनवगुप्त की साधारणीकरण-<br>विषयक अवधारणा (डा० सुलेखचन्द्र शर्मा) | रु० ५०.०० |
| २३. | साहित्यकौतुकम् (पं० टी० वी० परमेश्वर अय्यरः) | रु० ४०-०० |

प्राप्तिस्थानम्

'देववाणी-परिषद्, दिल्ली', ६ वाणी-विहारः, नयी दिल्ली-११००५९

( दूरभाष : ५५३२०६ )